श्रीः

नेपालराजकीय—

वीरपुस्तकालयस्थपुस्तकानां

# बृहत्सूचीपत्रम्



श्री ५ मन्महाराजाधिराजानां ४४ तमशुभजन्मोत्सवोपलक्ष्ये

बुद्धिसागरशर्मणः अध्यक्षतायां

वीरपुस्तकालयतः

संपादितं प्रकाशितञ्च

नेपालराजकीय–

वीरपुस्तकालयस्थपुस्तकानाम्



# बृहत्सूचीपत्रम्



यस्यायं

तन्त्रविषयकः

चतुर्थो भागः

तस्यायं पूर्वः खण्डः

वीरपुस्तकालयतः सम्पादितः प्रकाशितश्च



# वक्तव्य

प्रकाशित गरिंदैछ।
वीर पुस्तकालयद्वारा विभिन्न विषयहरूको विभाजन गरी सूची-पत्र
यसै क्रमको एउटा महत्त्वपूर्ण प्रकाशनको रूपमा यो सूची-पत्र सबै विद्याप्रेमी र अनुसन्धानका
अनुरागीहरूका लागि निकै सहायक हुनेछ । पुस्तकालयहरूको अन्तरराष्ट्रिय स्तरमा संबन्ध
खडा गर्न र एक अर्काको सहयोग गरी बढी उपयोगिता प्राप्त गर्न पनि यस सूची-पत्रले ठूलो
काम गर्नेछ । सूची-पत्र प्रकाशको रेखा जस्तो हो, जस्को सहायताले श्रम पर्ने वा अनावश्यक
समयको बर्बादी हुने अवस्थानै आइ पर्दैन । सुनियोजित ढंगले विषयक्रमहरू छुट्ट्याई नापसाइज
ग्रंन्थसंख्या पंक्ति आकार आदिहरूको वर्णन भएको यस सूची-पत्रले प्रत्येक अन्वेषकलाई
विषयको अन्त सम्म पुऱ्याउन सक्यो भने नै यस सूचीको सफलता मानिने छ । तंत्रको परंपरा
र यस्को प्रभाव हाम्रो मुलुकमा निकै प्रभावकारी ढंगले परेको छ । केही धार्मिक आध्यात्मिक वा
दार्शनिक क्षेत्रमा आजसम्म पनि यस्को प्रभावमा कुनै किसिमको शिथिलता देखा पर्दैन। कलाको
क्षेत्रमा पनि यस्को अमीट छाप परेको छ । तसर्थ तंत्र विद्याको विषय अध्ययनका लागि
सजिलो पार्न सूची-पत्र निकाल्नु जरूरी रह्यो । वीरपुस्तकालयमा तंत्रका ग्रन्थहरू २५००
करीब छन् र यस पूर्व खण्डमा ५२३ पुस्तकहरू समावेश गरिएका छन

यस सूचीको प्रकाशनमा मेहनत गर्ने वीरपुस्तकालयका सबै कर्मचारीहरू धन्यवादका पात्र
हुनु हुन्छ ।

रमेशजङ्ग थापा
निर्देशक

मितिः ।१।११।४

**श्री ५ को सरकार पुरातत्त्व र संस्कृति विभाग**

## पुस्तकालयीयवक्तव्यम्

वीरपुस्तकालयो नेपालराष्ट्रमात्रस्यैव नहि किन्तु समस्तविश्वस्यैव गौरवस्थानम् , यत्र नानाविधदुर्ज्ञेयप्राचीनलिपिमालालिखिता विभिन्नविषयकाः सुरक्षिता ग्रन्थाः सन्ति । तेषां ग्रन्थानां पूर्वैरत्रत्यैः पण्डितैः कृतमेकं बृहत् सूचीपत्रं वर्तते तत्र विषयविभागक्रमो वर्णानुक्रमश्च नानुसृतः, तादृशमपि सूचीपत्रं प्रकाशितं नासीत् इतितु सर्वैर्ज्ञायते, परमत्र पुस्तकालये कति विषयाः कस्मिन् वा विषये कियन्तो ग्रन्थाः सन्तीति जिज्ञासूनां मनसि स्थिताम् उत्कण्ठां पूरयतुम्, अथ च पुस्तकालयीयकार्यस्य सौविध्यार्थञ्च वर्णानुक्रमपरम्परां विषयानुक्रमपरम्परां चाश्रित्य बृहत्सूचीपत्रं संक्षिप्तसूचीपत्रं चेति उभयमपि सूचीपत्रं प्रकाशनार्हमिति पुस्तकालयीयसंमत्यनुसारं श्री ५ शासनशिक्षामन्त्र्यालयेन पुरातत्त्वसंस्कृतिविभागद्वारा अपेक्षितो द्रव्यराशिः पुस्तकालयाध्यक्षस्य हस्ते दत्तः । प्रतिवर्षं पुस्तकमुद्रणार्थं यावदपेक्षितो द्रव्यराशिर्दीयते च ।

जनमनोभावनादरपरायणश्री ५ महेन्द्रशासनानुरूपं पुस्तकालयीयैर्विद्वद्भिरपि बृहत्सूचीपत्रसंपादनकर्मणि उद्योगः कृतः । संक्षिप्तमपि सूचीपत्रं संपादितम । बृहत्सूचीपत्रस्य त्रयो भागा मुद्रिताः पाठकानाम् अनुसंदधानानां करकमलेषु समागताश्च । तस्यैवास्य बृहत्सूचीपत्रस्य अयं चतुर्थभागस्य पूर्वः खण्डः । अस्मिंश्चतुर्थभागे तन्त्रविषयकाणाम् आसन्नसार्धद्विसहस्राणां ग्रन्थानां समावेशोऽस्ति । पुकारपर्यन्ता ग्रन्था अस्मिन् पूर्वखण्डे समाविष्टा शिष्टास्तन्त्रग्रन्था उत्तरस्मिन् खण्डे मुद्रिता भविष्यन्ति । इत्थं विषयविभागमनुसृत्य बृहत्सूचीपत्रं समग्रं प्रकाशितं भविष्यति । नवागतानां पुस्तकानां मध्ये यथासंभवं केषां चन अत्रैव समावेशः केषांचन "आगन्तूनामन्ते संनिवेशः" इति न्यायेन सर्वान्ते संनिवेशो भविष्यति । तत्र भवतां संक्षिप्तमपि सूचीपत्रंम नेनैव भागेन सह उपहर्तुं पुस्तकालयः सहर्षं सन्नध्दोऽस्ति महानयं प्रमोदस्यावसरः ।
अत्र कार्यकर्तृणामज्ञानात् प्रमादात् सीसाक्षरयोजकप्रमादान्मुद्रणयन्त्रस्य वा वैगुण्यात् सन्ति बहवस्त्रुटयः । परं तु गुणगृह्या विपश्चितः प्रायशो निर्मत्सराः सन्तो गुणं गृहणीयुरथ च दोषोद्धरणाय सूचयेयुरिति अस्य संपादनलेखनसंशोधनादिकार्ये दत्तावधाना अत्रत्याः कृष्णप्रसाद देवीप्रसाद । बाबुकृष्ण—धनश्यामप्रभृतयःपण्डिता अन्येच पुस्यकालयकर्मचारिणः प्रशंसार्हाः सन्ति इति भूयो विज्ञाप्य विरमति ।

काष्ठमण्डपः

२०२०।१।८।१
वि. सं. सौर

विदुषां वशंवदो

बुद्धिसागरः पराजुलिः
अध्यक्षो वीरपुस्तकालयस्य

## अस्मिन् सूचीपत्र समागतानां संक्षिप्तपदानां विवरणम्

आकारः- आयामविस्तारमानम् ( इञ्च )
प्र. = प्रथमं सूचीपत्रम्
द्वि. = द्वितीयं सूचीपत्रम्
तृ. = तृतीयं सूचीपत्रम्
च. = चतुर्थं सूचीपत्रम्
ने. भा. स. = नेवारीभाषासहितम्
हि. भा. स. = हिन्दीभाषासहितम्
ग्रन्थः = ३२ अक्षरात्मकः श्लोकः
ने. सं. = नेवारीसम्वत्
ल. सं. = लक्ष्मणसम्वत्
वि. सं. = विक्रमसम्वत्

# तन्त्रग्रन्थाः

## अकुलवीरतन्त्रम्

क्रमाङ्कः प्र. १०७६

विषयाङ्कः १

ग्रन्थकारः श्रीमीननाथः, ताडपत्राणि, भुजिमोलिपिः (भुजबलाक्षरः)। पङ्क्तयः ५। आकारः ११$\frac{५}{३}$×१$\frac{३}{४}$। ग्रन्थसंख्या १००। पत्रसंख्या ७।

आदिवाक्यम्....

ॐ नमो भैरवाय। ॐ हाँ, ह्रीँ, हुँ फट् कराली कुलकपिलजटाशेखरा रौद्रदंष्ट्र्यै राँ रीँ रुँ रैँ महेशे र र र र र र र रां ज्वालनी रौद्रमूर्त्तिः। ॐ क्षो क्षां क्षांभिसन्दि प्रकटितवदने रक्ष लोलायताक्षि ॥

पुष्पिकावाक्यानि—

इति महच्छ्रीमीननाथावतारे अकुलवीरपटलः प्रथमः

इति मन्त्राष्टकः समाप्तः।

## अकुलागमतन्त्रम्

क्रमाङ्कः प्र. ४६६

विषयाङ्कः २

ग्रन्थकारः ईश्वरः, नेपालीयं कागतम्, नेवारीलिपिः, पङ्क्तयः ५। आकारः ७$\frac{३}{४}$×२$\frac{७}{८}$। ग्रन्थसंख्या ६००। पत्रसंख्या ८१। ९ पटलान्तम् पूर्णम्।

## अकुलागमतन्त्रम्

क्रमाङ्कः प्र. ६

विषयाङ्कः ३

पूर्णम्। ग्रन्थकारः— ईश्वरः। नेपालीयंकागजम्, नेवारीलिपिः, प्रतिपत्रं प्रायः ६ पङ्क्तयः। आकारः—११×३$\frac{१}{२}$, ग्रन्थसंख्या-८००। पत्रसंख्या ५२। लेखसमयः- ने सं. ७९१।

आरम्भः—

श्रीब्रह्मणेनमः ॥ अज्ञानतिमिरान्धस्यज्ञानाञ्जनशलाकया। चक्षुरुन्मीलितं येन तस्मै श्रीगुरवेनमः ॥ यस्तु आदौ त्वया नाथ मुनिशिष्यैः अनेकधा। अनेकशास्त्रमायादौ कथिता परमेश्वर ॥ प्रशन्नोदेवदेवेश भव दुःखविनाशन। अनेकशास्त्रश्रवणादस्माकं भ्रामितंमनः ॥ केन मे कारणं कर्म्म कियोगः प्रोच्यते सतु। योगस्तु षड्विधः प्रोक्तो

नानात्वं तस्य दृश्यते ॥ अन्ततर्भेदभिन्नस्य मनेकाशास्त्रचोदिता । शास्त्रस्य संगतिर्नास्ति शंसयं कथय प्रभो ॥ न तकेन मार्गेण गर्भवासस्तु दारुणाः । देवानां परमां भक्ति श्रुत्वातु परमंमुनिः ।

समाप्तिः—

सधन्यः पुरुषो योगे यस्य बुद्धिवरानने । भवनोशः सविज्ञेयो मारुतस्यकुलेगतिः ॥२२७॥ आसनादिक्रमेनैव प्राणायामं समभ्यसेत् । अभ्यासाच्च स्वयं प्राणो गच्छते व्योम मण्डलम् ॥ २२८ ॥ अयं योगः सर्वशास्त्रे विज्ञातव्यो वरानने । गुरुप्रसादात् ज्ञातव्यं रहस्यं ह्यकुलागमे ॥ २२९ ॥ इति श्रीअकुलागमे महातन्त्रे योगसारसमुच्चये ईश्वर पार्व्वतीसम्वादे चतुराश्रमादिकथनंनाम नवमः पटलः ॥ ९ ॥ ॥ शुभम् ॥ शुभं भवतु कल्याणं आरोग्यं सुखसंपदा । मम शत्रुविनाशाय अकुलायनमोस्तुते ॥ ॥ संवत् ७९१ वैशाखे कृष्णपक्षे च नवमी रविवासरे ॥ शुभम् ॥

पुष्पिकावाक्यानि ।

इति श्री अकुलागममहातन्त्रे योगसारसमुच्चये प्रथमः पटलः ।

" श्रीअकुलागममहातन्त्रे योगसारसमुच्चये ईश्वरपार्वतिसम्वादोनाम द्वितीयः पटलः ।

" श्रीअकुलागममहातन्त्रे योगशास्त्रसमुच्चये मूर्त्त भावना नाम तृतीय पटलः ।

" श्रीअकुलागमेमहातन्त्रे योगसारसमुच्चये ईश्वरपार्वतिसम्वादे चतुर्थः पटलः ।

" श्रीअकुलागममहातन्त्रे योगसारसमुच्चये ईश्वरपार्वतिसम्वादे पञ्चमः पटलः ॥

" श्रीअकुलगममहातन्त्रे योगसारसमुच्चये ईश्वरपार्वतिसम्वादे षष्ठमः पटलः ।

" श्रीअकुलागमे महातन्त्रे योगसारसमुच्चये ईश्वरपार्वतीसम्वादे सप्तमः पटलः ।

" श्रीअकुलागमे महातन्त्रे योगसारसमुच्चये ईश्वरपार्वतीसम्वादे दीक्षाकथनंनाम अष्टमः पटलः ।

" श्रीअकुलागमे महातन्त्रे योगसारसमुच्चये ईश्वरपार्वतीसम्वादे चतुराश्रमादिकथनं नाम नवमः पटलः ।

## अगस्त्यसंहिता

**( ३५ तमाध्यायमात्रा )**

**स्तोत्राणिच**

**क्रमाङ्कः तृ. १६५** **विषयाङ्कः ४**

ग्रन्थकारः ··· । नेपालीयंकागजम् । नेवारीलिपिः । पङ्क्तयः १० । आकारः

१७$\frac{३}{४}$×३$\frac{५}{८}$ । गृन्थसंख्या १४० । पत्रसंख्या ४ । संवत् ८०० ।

## अघोरनिर्णयः

( पारमेश्वरीतन्त्रान्तर्गतः )

क्रमाङ्कः प्र. १६०६ विषयाङ्कः ५

आदिमध्यखण्डितः । गृन्थकारः ··· ····। ताडपत्राणि । नेवारीलिपिः । पङ्क्तयः ४—६ । आकारः १०$\frac{५}{८}$×१$\frac{३}{४}$ । गृन्थसंख्या ६० । पत्रसंख्या ६ । लेखसमयः ने. सं. १८७। पुस्तकमिदमतिजीर्णं शीर्णं च ।

७४ तमपत्रस्य निरङ्कपृष्ठे आरम्भवाक्यम —

··· ··· समालिखेत् । ध्रुवान्तमासनस्थञ्च सप्ताविंशतिमा ··· । लोहितरुद्रपालाया ··· ··· ··· ··· । लिनीहृदयम्परम् । एकादशे चतुर्थञ्च शूलदण्डासनस्थितम् । चक्षान्त मूर्ध्नि प्रदातव्यं रुद्रानुगृहवेदितम् ।

अन्तिमंवाक्यम् ।

महालक्ष्मी विला ··· ··· (वि) ल्वपत्राज्यसंयुतम । अष्टोत्तरसहस्रेण वीर सिद्धिमवाप्नुयात् । एतत्कर्म अघोरस्य उक्तञ्च परमेश्वरि। यदिच्छेत्साधयेत्कार्यमस्य मन्त्रप्रभावतः॥ ॥ इति श्रीपारमेश्वरीमते नवकोटिसंहितायां चतुरशीतिसहस्रे अघोरनिर्णयश्चत्वारिंशतिमः पटलः समाप्तः ॥ इति मण्डलमहाश्रीः ॥ सम्वत् १८७ भाद्रपद एकादशी तिथि।

## अङ्कयन्त्रश्लोकव्याख्या

क्रमाङ्कः तृ. ६७ विषयाङ्कः ६

गृन्थकारः ···· ····। नेपालीयंकागजम् । नेवारालिपिः । पङ्क्तयः ७ । आकारः ८$\frac{३}{८}$×३$\frac{३}{८}$ । गृन्थसंख्या ८० । पत्रसंख्या ६ । आदिखण्डिता ।

## अभिनय(व)गुरुशाङ्करी ( मानसिककायिकपूजाकाण्डात्मिका )

( वामकेश्वरतन्त्रोक्तसौभाग्यकवचपटलयुता ) २ उपदेशान्ता ।

क्रमाङ्कः प्र २५० विषयाङ्कः ७

गृन्थकारः — वीरशङ्करानन्दनाथः । नेपालीयंकागजम् । देवनागरीलिपिः ।

पंक्तयः ९ । आकारः ११$\frac{?}{?}$×४$\frac{?}{४}$ । ग्रन्थसंख्या २३०० । पत्रसंख्या ११३ । कतिपय पत्राणि जीर्णानि घृष्टाक्षराणिच ।

आदिवाक्यम् :—

श्रीपरदेवतायैनमः । एका सा परमा शक्ती नद्वितीया परेश्वरी । एकाधा(रा)महामाया विश्वं व्याप्य व्यवस्थिता ॥ १ ॥.... पराशक्ती विभिन्ना परमेश्वरी । षट्सिंहासनगा देवी नायिका षट्प्रकीर्तिता ॥ २ ॥

पुष्पिकावाक्यानि ।

इति श्रीपाशुपताचार्यवर्यश्रीमहेशानन्दनाथश्रीचरणपरिचर्यापरायणश्रीमद्वीरशङ्करानन्दनाथेना विरचितायां सकलतंत्रसारोद्धृतायां श्रीमदभिनयगुरुशाङ्कर्यां मानसिकपूजाकाण्डे भूमिकाचरनंनाम प्रथमो प्रदेश ॥

इति श्रीमहापाशुपताचार्यवर्यश्रीमहेशानन्दनाथश्रीचरणपरिचर्यापरायणे श्रीमद्वीरशङ्करानन्दनाथेनाचरितायां सकलतंत्रसारोद्धृतायां श्रीमदभिनयगुरुशांकर्यां कायिकपूजाकाण्डे संध्यानिरूपणंनाम प्रथमोप्रदेश ( द्वितीय ? ) ।

इति श्रीमहापाशुपताचार्यवर्यश्रीमहेशानन्दनाथश्रीचरणपरिचर्यापरायणे श्रीमद्वीरशङ्करानन्दनाथेनाचरितायांसकलतंत्रसारोद्धृतायां श्रीमदभिनयगुरुशांकर्यां कायिक पूजाकाण्डे संध्योपस्थानादिप्राणप्रतिष्ठान्तनिरूपणंनाम द्वितीयो प्रदेशः ।

इति श्रीमहापाशुपताचार्यवर्यश्रीमहेशानन्दनाथश्रीचरणपरिचर्यापरायणेन श्रीमद्वीरशङ्करानन्दनाथेना चरितायां सकलतंत्रसारोद्धृतायां श्रीमदभिनय गुरुशांकर्यां कायिकपूजाकाण्डे मातृकादिपूर्वषोढान्तन्यासनिरूपणंनाम तृतीयो प्रदेशः ॥

## अभिनयगुरुशाङ्कर्याः कायिकपूजाकाण्डम्

क्रमाङ्कः प्र. १०३४ विषयाङ्कः ८

ग्रन्थकारः— वीरशङ्करानन्दनाथः । नेपालीयंकागजम् । नेवारीलिपिः । पंक्तयः ११ आकारः १४×४$\frac{३}{?}$ । ग्रन्थसंख्या २६००, पत्रसंख्या ८४। अपूर्णम् ।

पुष्पिकावाक्यानि ।

इति श्रीमहापाशुपताचार्यवर्यश्रीमहेशानन्दनाथश्रीचरणपरिचर्यापरायणे(न)श्रीमद्वीरशङ्करानन्द नाथेनारचितायां सकलतंत्रसारोद्धृतायां श्रीमदभिनयगुरुशांकर्या(म्) कायिकपूजाकाण्डे (आ)म्नायशांभवं(व)न्यासनिरूपण(म्)नाम पञ्चमोपदेशः ॥

,, ,, ,, षोडशार्हमहाविद्यान्यासनिरूपणंनाम षष्टमोपदेशः ।

,, ,, ,, मन्दिरपूजादिपंचमहायज्ञान्तनिरूपणंनाम सप्तमोपदेशः ।

,, ,, पीठपूजादिमण्डलान्तपूजानिरूपणंनाम अष्टमोपदेशः ।

,, ,, ऊर्ध्वाम्नायादिपूर्वपंक्तिपश्चिमाम्नाया(न्)तपूजाविधिनिरूपणंनाम नवमोपदेशः ।

## अमृतेशतन्त्रम्

( मृत्युजिदमृतेशविधानंवा )

क्रमाङ्कः प्र. २८५, विषयाङ्कः ६

ग्रन्थकारः ... ... । ताडपत्राणि । प्राचीनदेबनागरीलिपिः । प्रतिपत्रं ५ पङ्क्तयः । आकारः १२⅓×२⅛ । ग्रन्थसंख्या १३०० । पत्रसंख्या ८९ ॥ २४ पटलान्तं पूर्णम् । लेखसमयः सं ३२० । कतिपयपत्राणि प्रान्ते मूषिकभक्षितानि ।

आरम्भवाक्यम् ।

ॐ नमः शिवादित्यो (भ्यो) गुरुभ्यः ॥ यस्तृधा त्रिस्ववस्थासु रूपमास्थाय शक्तिमान् । उद्भवस्थितिसंहार(म्) कृत्स्नं विश्वस्य शक्तितः । विदधाति नमस्तस्मै शुद्धामृतमयात्मने । शिवाय ब्रह्मविस्न्वे(ष्णवो)शपरार(य) परमात्मने । कैलाशशिखरासीनं देवदेवं महेश्वरम् । क्रीडंतंच गणैःसार्धं पार्वत्या सहितं हरं । दृष्ट्वा प्रमुदितां(तं)देवं प्राणिनां हितकाम्यया । उत्संगादवतीर्याशु पादौ जग्राह पार्वती । पप्रच्छ परया भक्त्या सन्तोष्य परमेश्वरं ॥

अन्तिमंवाक्यम् ।

आज्ञाभंगेन देवेशि देहपातो भविष्यति । ददाति यदि मोहेन स्नेहेन धनलिप्सया । गच्छते नरकं घोरमित्याज्ञा पारमेश्व(री) । ... .... शस्य पालनात्सिद्धिमाप्नुयात् । पालनाच्च भवेदेवि मृत्युजित्परमेश्वरः ॥

पुष्पिका ।

इति सर्वस्रोतसंग्रहसारे मृत्युजिदमृतीशविधाने तंत्रावताराधिकारोनाम प्रथमःपटलः॥

इति सर्वस्रोतसंगृहसारे अमृतीशविधाने मृत्युंजये मंत्रोद्धारविधिर्द्वितीयः पटलः ॥

इति श्रीसर्वस्रोतसंग्रहसारे मृत्युजिदमृतोशविधाने यजनाधिकार(स्)तृतीयः पटलः ।

इति श्रीसर्वस्रोतसंग्रहसारे मृत्युजिदमृतीशविधाने दीक्षाधिकारश्चतुर्थः पटलः ।

इति श्रीसर्वस्रोतसंगृहसारे मृत्युजिदमृतीशविधाने अभिषेकसाधनाधिकारः पञ्चमः पटलः ।

इति श्रीसर्वस्रोतसंगृहसारे मृत्युजिदमृतीशविधाने स्थलाधिकारः षष्ठःपटलः ।

इति श्रीसर्वस्रोतसंगृहसारे अमृतेशविधाने सूक्ष्म(स्)थानाधिकारः सप्तमः पटलः ।

इति श्रीसर्वस्रोतसंगृहसारे मृत्युजिदमृतीशविधाने कालवंचनो नामाष्टमः पटलः ।

इती श्रीमृत्युजिदमृतीशविधाने सदाशिवाधिकारोनाम नवमः पटलः ।

इति श्रीसर्वस्रोतसंग्रहसारे मृत्युजिदमृतीशविधाने दक्षिणवक्त्राधिकारो नाम दशमः पटलः ।

इति श्रीसर्वस्रोतसंग्रहसारे मृत्युजिदमृतीशविधाने उत्तरतन्त्राधिकारे एकादश(:)पठलः ।

इति श्रीसर्वस्रोतसंग्रहसारे मृत्युजिदमृतीशविधाने कुलाम्नायाधिकारो द्वादशः पटलः ।

इति श्रीसर्वस्रोतसंग्रहसारे मृत्युजिदमृतोशविधाने सर्वविद्याधिकारस्त्रयोदशमः पटलः ।

इति मृत्युजिदमृतोशविधाने सर्वाधिकारोनाम चतुर्दशमः पटलः ।

इति श्रीसर्वस्रोतसंगृहसारे मृत्युजिदमृतीशविधाने पञ्चदशमः पटलः ।

इति श्रीसर्वस्रोतसंगृहसारे मृत्युजिदमृतीशविधाने व्याप्त्योधिकारः शोडशमःपटलः ।

इति श्रीसर्वस्रोतसंगृहसारे मृत्युजिदमृतीशविधाने यन्त्राधिकारोनाम सप्तदशमः पटलः ।

इति (अ)मृतीशविधाने वश्याकर्षणाधिकार अष्टादशः पटलः ।

इति श्रीसर्वस्रोतसंगृहसारे मृत्युजिदमृशीशविधाने एकोनविंशतिमः पटलः ।

इति श्रीसर्वस्रोतसंगृहसारे मृत्युजिदमृतीशविधाने राजरक्षाधिकारोनाम विंशतिमःपटलः ।

इति श्रीसर्वस्रोतसंगृहसारे मृत्युजिदअमृतीशविधाने इष्टपाताद्यधिकारो एकविंशतिमः पटलः।

इति श्रीसर्वस्रोतसंगृहसारे मृत्युजिदमृतीशविधाने जीवाकर्षया(णा)द्यधिकारो द्वावंशतिमः पटलः ।

इति सर्वस्रोतसंगृहसारे मृत्युजिदमृतीशविधाने मन्त्रविचारवर्णनोनाम (त्रयोविंशम) पटलः ।

इति मृत्युजिदमृतीशविधाने मन्त्रमाहात्म्य (म्) (चतुर्विंश)तिमः पटलः ।

॥ ॥ समाप्तमिदं मृत्युजिदमृतीशविधाने (नं) सम्पूर्णमितिशुभम् ॥( )॥

सम्वत् ३२० चैत्रसुदि ९ शनिदिने विश्वेश्वरलिखापितमिदं पुस्तकम् ।

पण्डितकीर्तिधरलिखितंमया ॥ ॐ नमः शिवाय ।

# अशेषकुलवल्लरी

( वामकेश्वरीस्तुतिश्च )

क्रमाङ्कः प्र. १०७७, विषयाङ्कः १०

ग्रन्थकारः गणनाथभट्टः । ताडपत्राणि । प्राचीननेवारोलिपिः । पङ्क्तयः ५ । आकारः १४×१½ । ग्रन्थसंख्या २२० । पत्रसंख्या १६ ।अन्त्यखण्डिता ।

आदिवाक्यम् ।

ॐ नमः श्रीश्रीत्रिपुराम्बिके ॥ पञ्चवक्त्रोपि भगवान्नै(नै)श्वर्यस्थोप्यनीश्वरः। स्तुतो यस्या मह(ा)म्वायास्तं नमामि महेश्वरीः(र्)॥स जयति गुरुम् गरीयानज्ञानार्थतमो यदुपदेशात्॥क्षयितु क्षणेन सकलमम्नुतेन्दुसरस्वती श्रीमान्। गर्गान्वये समभवत्कबिराजराजनीराजिता(ङ्)घ्रिकमलः सुलभारामः(मर)श्रीः । भट्टोवृहस्पतिरितीह यथार्थनामा भूमीन्द्रमौलिमणिरञ्जितपादपीठः ॥ समजनि तनयोथ(स्)तेन विद्यानिधानं निवसति विरजायां पूजनार्थं भवान्याः । स सकल-गुणसिन्धुर्बन्धुतुल्यो नृपानां(णां) जगदुपकृतिकर्त्ताश्रीमहादेवभट्टः ॥ तस्योत्मजः सकलसत्क-विदासदासोनिर्म्मत्सरः सकलतन्त्ररहस्यवेत्ता । अम्बा स्वरांघ्रिसरसीरुहदत्तचित्तो देव्यार्च्चनेच-निरतो गणनाथभट्टः ॥ समालोक्य मियन्तेन देव्या श्रीवामिकोभतम् । क्रियते पद्धतिः सम्यगशेषकुलवल्लरी ॥

अन्त्यवाक्यम् ।

कम्वुग्रीवां महादेवीं मृणाललिलितैर्भुजैः। रक्तोत्पलदलाकारसुकुमारकराम्बुजाम् । करा-म्वुजनखज्योतिवितानितनभद्य ··· ··· । अतः परंखण्डितम् ।

पुष्पिकावाक्यम् ।

इति भट्टश्रीगणनाथविरचितोयामशेषवल्लर्या(म्) गुरुध्यानपद्धतिः प्रथमा ॥

अत्रादितश्चतुर्थपत्रस्य निरङ्कपृष्ठपर्यन्तं महाराजाधिराजविद्याधरचक्रवर्त्तिवत्सराजविरचिता वामकेश्वरीस्तुतिर्वर्तते ततःपरं पत्राङ्क १६ पर्यन्तमशेषकुल्लवलरी ॥ वामकेश्वरीस्तुति-र्यथास्थानमन्विष्यम् ।

## अष्टमातृकाध्यानम्

(महामायास्तोत्रसहितम्)

क्रमाङ्कः तृ. ५७ विषयाङ्कः ११

ग्रन्थकारः ..... ... ... । नेपालीयं कागजम् । नेवारीलिपिः । पङ्क्तयः ७ । आकारः ७$\frac{?}{?}$×३$\frac{५}{८}$ । ग्रन्थसंख्या ३ । पत्रसंख्या ११। अतीवजीर्णम् ।

## अस्त्रोपसंहरणमन्त्रः

क्रमाङ्कः प्र. १५६१. विषयाङ्कः १२

ग्रन्थकारः ... ... ... । मध्यदेशीयंकागजम् । देवनागरीलिपिः । पङ्क्तयः ७ ।

आकारः ८$\frac{१}{२}$×३$\frac{१}{२}$ । ग्रन्थसंख्या २५ । पत्रसंख्या ३। पूर्णः ।

## आकाशभैरवकल्पः

क्रमाङ्कः तृ. २४६. विषयाङ्कः १३

ग्रन्थकारः ... ... ... । नेपालीयंकागजम् । देवनागरीलिपिः । पङ्क्तयः ११ ।

आकारः १४×५$\frac{५}{८}$ । ग्रन्थसंख्या २३०० । पत्रसंख्या ८४ ।

आदिवाक्यम् :—

श्रीगणेशायनमः । हरिः ॐ गुरुं गणपतिं देवीं भैरवं शरभेश्वरम् । नमस्कृत्य प्रवक्ष्यामि मन्त्रशास्त्रं बिभूतये ॥ सांगं सलक्षणं सर्वं वेदसारमभीष्टदम् । ज्ञानदं जीवजंतूनां साधकानां सुखावहम् ॥ देव्युवाच । श्रीशिवेशानं तदेवेश श्रीनाथ जगतां पते । श्रीकालगलचिद्रूप श्रीमते भवते नमः ॥

पुष्पिकावाक्यानि —

इति आकाशभैरवकल्पेप्रत्यक्षसिद्धिप्रदेउमाभहेश्वरसंवादेउत्साहप्रक्रमोनाम प्रथमोऽध्यायः ।१।

" " यजनविधिनाम द्वितीयः ।

" " उत्साहयजनं नाम तृतीयोऽध्यायः ।

" " उत्साहाभिषेकविधिर्नाम चतुर्थोऽध्यायः ।

,, ,, मन्त्रयन्त्रप्रक्रमंनाम पञ्चमोध्यायः।
,, ,, चित्रमालामंत्रंनांम षष्ठोऽध्यायः ।
,, ,, वश्याकर्षणप्रयोगोनाम सप्तमोऽध्यायः।
,, ,, मोहनदावकप्रयोगोनाम अष्टमोऽध्यायः।
,, ,, स्तम्भविद्वेषप्रयोगोनाम नवमोऽध्यायः ।
,, ,, उच्चाटननिग्रहप्रयोगोनाम दशमोऽध्यायः ।
,, ,, भोगप्रदोनामैकादशोऽध्यायः ।
,, ,, आशुतार्क्ष्यविधिर्नाम द्वादशोऽध्यायः ।
,, ,, आशुगारुडप्रयोगभेदोनाम त्रयोदशोऽध्यायः।
,, ,, आशुगारुडकवचंनाम चतुर्दशोऽध्यायः ।
,, ,, शिष्याचारविधिर्नाम पंचदशोऽध्यायः ।
,, ,, शरभेशाष्टकस्तोत्रंनाम श(स)प्तदशोऽध्यायः ।
,, ,, अष्टादशोऽध्यायः।
,, ,, एकोनविंशोऽध्यायः ।
,, ,, विंशोऽध्यायः ।
,, ,, एकविंशोऽध्यायः ।
,, ,, रक्ष(T)भिषेकविधि(र्)नामद्वाविंशोऽध्यायः।
,, ,, बलिविधानंनाम त्रयोविंशोऽध्यायः।
,, ,, चतुर्विंशोऽध्यायः ।
,, ,, आचारविधिर्नाम षड्विंशोऽध्यायः ।
,, ,, मातृकावर्णनंनाम सप्तविंशोऽध्यायः।
,, ,, भद्रकालिविधिनाम अष्टाविंशोऽध्यायः।
,, ,, औषधविधिर्नामैकोनत्रिंशोऽध्यायः ।
,, ,, शूलिनीदुर्गाकल्पनंनाम त्रिंशोऽध्यायः ।
,, ,, शूलिनाविधिर्नाम एकत्रिंशोऽध्यायः ।
,, ,, वीरभद्रकल्पंनाम द्वात्रिंशोऽध्यायः ।
,, ,, जगत्क्षोभनमालामंत्रनाम त्रय(स्)त्रिंशोऽध्यायः ।
,, ,, चतुरस्त्रिशोऽध्यायः ।

,, ,, वलिविधिर्नाम पंचत्रिंशोऽध्यायः ।
,, ,, त्रपाविधिनाम षट्त्रिंशोऽध्यायः ।
,, ,, वडवानलभैरवविधिर्नाम सप्तत्रिंशोऽध्यायः ।
,, ,, दिक्पालविधिर्नाम अष्टत्रिंशोऽध्यायः ।
,, ,, व्याधिकल्पनंनाम एकोनचत्वारिंशोऽध्यायः ।
,, ,, मृत्युविधिर्नाम चत्वारिंशोऽध्यायः ।
,, ,, शरभकवचंनामैकचत्वारिंशोऽध्यायः ।
,, ,, मन्मथप्रयोगोनाम द्विचत्वारिंशोऽध्यायः।
,, ,, चामुण्डाविधिर्नाम त्रिचत्वारिंशोऽध्यायः।
,, ,, मोहिनीविधिर्नाम चतुश्चत्वारिंशोध्याय ।
,, ,, द्राविणी(प्रयोगोनाम) पञ्चचत्वारिंशोऽध्यायः ।
,, ,, शब्दाकर्षिणीप्रयोगोनाम षट्चत्वारिंशोऽध्यायः ।
,, ,, भाषासरस्वतीप्रयोगोनाम सप्तचत्वारिंशोऽध्यायः ।
,, ,, महालक्ष्मीप्रयोगोनामाष्टचत्वारिंशोऽध्यायः ।
,, ,, मायाविधिर्नामैकोनपञ्चाशद(त्तमो)ध्यायः ।
,, ,, पुलिन्दिनीविधिनाम पञ्चा(श)द(त्तमो)ध्यायः ।
,, ,, महास्नानविधिर्नाम एकपञ्चाशोऽध्यायः ।
,, ,, संक्षोभिणीविधिनाम द्विपञ्चाशदध्यायः ।
,, ,, धूमावतीविधिर्नाम त्रिपञ्चाशदध्यायः ।
,, ,, ,, ,, चतुः पञ्चाशदध्यायः।
,, ,, नद्युत्तारणविधिर्नाम पञ्चपञ्चाशदध्यायः ।
,, ,, चित्रविद्याविधिर्नाम षट्पञ्चाशदध्यायः ।
,, ,, देशिकस्तोत्रंनाम सप्तपञ्चाशदध्यायः ।
,, ,, दुःस्वप्ननाशनमंत्रविधिर्नाम अष्टपञ्चाशदध्यायः ।
,, ,, पाशविमोचनंनाम एकोनषष्टितमोऽध्यायः।
,, ,, गणपतिविधिर्नाम षष्टितमोऽध्यायः ।
,, ,, औषधमन्त्रविधिनामैकषष्टितमोध्यायः ।

इति श्रीआकाशभैरवकल्पे प्रत्यक्षसिद्धिप्रदे उमामहेश्वरसंवादे ब्रह्मकल्पभैरवं समाप्तम् ॥ शुभम् ॥

## आकाशभैरवकल्पः

**क्रमाङ्कः तृ. १,** **विषयाङ्कः १४**

ग्रन्थकारः ...... । मध्यदेशीयंकागजम् । देवनागरीलिपिः । पङ्क्तयः ९।१०। आकारः १२ॢ×५ । ग्रन्थसंख्या १६०० । पत्रसंख्या ६९॥ ८१ अध्ययोन्तं । मध्यखण्डितम् ।

## आकाशभैरवकल्पः

**क्रमाङ्क च.** **विषयाङ्कः१५**

ग्रन्थकारः ... ... । नेपालीयंकागजम् । देवनागरीलिपिः । पङ्क्तयः ९ । आकारः

१२३/१०×४४/५ । ग्रन्थसंख्या २५७५ । पत्रसंख्या ६६ । एकाशीत्यध्यायात्मकः ।

## आकाशभैरवकल्पः

क्रमाङ्कः च. विषयाङ्कः १६

ग्रन्थकारः ··· ··· । नेपालीयंकागजम् । देवनागरीलिपिः । पङ्तयः ९ । आकारः १२३/१०×४४/५ । ग्रन्थसंख्या ३०० । पत्रसंख्या १० । चतुश्चत्वारिंशपटलात्मकः ।

## आगमकल्पद्रुमः

क्रमाङ्कः प्र. ५६ विषयाङ्कः १७

ग्रन्थकारः—श्रीगोविन्दः, । नेपालीयंकागजम् । नेवारीलिपिः । प्रतिपत्रं प्रायः ६ पङ्तयः । आकारः १०८/१०×३ । ग्रन्थसंख्या ४००० । पत्रसंख्या १५७ । प्राचीनं नवीनंच मिलित्वा पुस्तकं पूर्णम् । समयः वि.सं. १४२४ ।

आरंभवाक्यम् ।

ॐ नमो गुरवे । यस्यत्रह्मपुरंदराद्रितनयाप्रद्युम्नदेहः क्वचित्
कापिस्थाणुसरस्वतीशशधरैरावद्धदेहः क्वचित् ।
लक्ष्मीभ्रातृसमन्विता क्वचिदहो सृष्टिस्थितिध्वंसनं
तं वन्दे शु(सु)रपूजितं च जगतां मूलं विभूत्याप्तये ॥
श्रीशङ्कराचार्य्यवचोर्णवं श्रीगोविन्दनाम्नाद्विजपुंगवेन ।
आलोड्य सर्वागमतन्त्रसारं कल्पद्रुमोयं निहितः पृथिव्याम् ॥

समाप्तिवाक्यम् ।

प्रागासीद्गौडभूमौ श्रुतिकुलनिपुणः श्रीजगन्नाथनामा
गोपीनाथाङ्घ्रिपद्मोदरमधुमधुपः प्राप्तहर्षः प्रहर्षः ।
धीरस्तस्यात्मजन्माखिलगुणनिपुणः श्रीशगोविन्दनामा
शाकेवेदाश्विशक्रे मकरगतरवावुद्धृतं येन तन्त्रम् ॥
आवेश्य भ्रामयित्वा चिरदिनमनिशं ज्ञानशैलं तदन्तः
सन्मित्रामित्रसंघैरदितिदितिसुतैर्दृष्टिरज्ज्वाधिकृष्य ।
आलोड्याशेषतन्त्रार्णवमिहनिहितः कल्पवृक्षः पृथिव्यां
तर्तुं संसारदुःखं सुविमलमतयः संश्रयध्वं चिराय ॥

समाप्तोऽयं ग्रन्थः शुभमस्तु सर्वदा श्री श्री श्री भवान्यै नमः ।।

पुष्पिकावाक्यानिः—

इत्यागमकल्पद्रुमे प्रथमशाखायां प्रथमः पटलः ।
" " " " द्वितीयः "
" " " " तृतीयः "
" " " " चतुर्थः "
" " " " पञ्चमः "

इत्यागमकल्पद्रुमे प्रथमशाखायां षष्ठः पटलः समाप्तः, समाप्तोयं प्रथमशाखाप्रपञ्चः ।।

इत्यागमकल्पद्रुमे द्वितीयशाखायां प्रथमः पटलः
" " " " द्वितीय "
" " " " तृतीयः "
" " " " चतुर्थः "

इत्यागमकल्पद्रुमे द्वितीयशाखायां पञ्चमः पटलः समाप्तोयं द्वितीयशाखाप्रपञ्चः ।

इत्यागमकल्पद्रुमे तृतीयशाखायां प्रथमः पटलः
" " " " द्वितीयः "
" " " " तृतीयः "
" " " " चतुर्थः "
" " " " पञ्चमः "

इत्यागमकल्पद्रुमे तृतीयशाखायां षष्ठः पटलः । समाप्तस्तृतीयशाखाप्रपञ्चः ।

इत्यागमकल्पद्रुमे चतुर्थशाखायां प्रथमः पटलः
" " " " द्वितीयः "
" " " " तृतीयः "
" " " " चतुर्थः "

इत्यागमकल्पद्रुमे चतुर्थशाखायां पञ्चमः पटलः । समाप्तश्चतुर्थशाखाप्रपञ्चः ।

इत्यागमकल्पद्रुमे पञ्चमशाखायां प्रथमः पटलः
" " " द्वितीयः "

,,　　,,　　,,　　तृतीयः ,,

,,　　,,　　,,　　चतुर्थः ,,

,,　　,,　　,,　　पञ्चमः ,,

इत्यागमकल्पद्रुमे पञ्चमशाखायां षष्ठः पटलः समाप्तः पञ्चमशाखाप्रपञ्चः ॥

## आगमकल्पद्रुमः

क्रमाङ्कः प्र. २१४　　　　विषयाङ्कः १८

ग्रन्थकारः गोविन्दः । नेपालीयं कागजम् । नेवारी लिपिः । पङ्क्तयः ७ । आकारः ११½×३९ । ग्रन्थसंख्या २००० । पत्रसंख्या १०६ ।

## आगमकल्पलता

क्रमाङ्कः प्र. १८६,　　　　विषयाङ्कः १६

ग्रन्थकारः यदुनाथः । नेपालीयं कागजम् । देवनागरी लिपिः । पङ्क्तयः ९ । आकारः १३¾×५ । ग्रन्थसंख्या ९०० । पत्रसंख्या ३६६ ॥ २८ पटलान्ता पूर्णा ।

आदिवाक्यम् ।

ॐ नमः । श्रीगणेशाय नमः । श्रीत्रिपुरसुन्दर्यै नमः । ॐ यत्पादपङ्कजयुगं हृदि संनिवेश्य विश्वंसृजत्यविकलं खलु पद्मजन्मा । विष्णुश्च पालयति संहरते महेशस्तं देवमादिपुरुषं सततं नतोस्मि ॥ नत्वा गिरीशं गिरिजां गणेशं वाणीं मुनीन्द्रैः स्तुतपादपल्लवम् (वां) । विलोक्य शास्त्रं यदुनाथशर्मणा वितन्यते ह्यागमकल्पवल्ली ॥ तथा ॥ प्रपञ्चसारसिद्धान्तं शारदातिलकं तथा । सपरिष्करमालोक्य तथा सारसमुच्चयम् ॥ यत्नेन दीपिकां दृष्ट्वा तथा च लघुदीपिकाम् ॥ तथा पूजाप्रदीपञ्च पुरश्चरणचन्द्रिकामित्यादि ॥

पुष्पिकावाक्यानि । अत्र पुष्पिकावाक्यानि क्रमबद्धानि नदृश्यन्ते

इति श्रीआगमकल्पलतायां प्रथमः पटलः ॥ १ ॥

इत्यागमकल्पलतायां द्वितीयः पटलः ॥ २ ॥

,,　　,,　　तृतीयः पटलः ॥ ३ ॥

इति श्रीयदुनाथचक्रवर्तिविरचितायामागमकल्पलतायां प्रथमः कल्पः ।

,,　　,, षष्ठः पटलः ॥ ६ ॥

,,　　,,　　सप्तमः पटलः ॥ ७ ॥

,,　　,,　　अष्टमः ,, ॥ ८ ॥

,, ,, नवमः ,, ॥ ९ ॥
,, ,, विंशः ,, ॥ २० ॥
,, ,, एकविंशः ,, ॥ २१ ॥
,, ,, द्वाविंशः ,, ॥ २२ ॥
,, ,, त्रयोविंशः ,, ॥ २३ ॥
,, ,, चतुर्विंशः ,, ॥ २४ ॥
,, ,, पञ्चविंशः,, ॥ २५ ॥
,, ,, षड्विंशः ,, ॥ २६ ॥
,, ,, सप्तविंशः,, ॥ २७ ॥
,, ,, अष्टाविंशः,, ॥ २८ ॥

## आगमकल्पलता

क्रमाङ्कः प्र. १८४, विषयाङ्कः २०

ग्रन्थकार :– यदुनाथश्चक्रवर्ती । नेपालीयं कागजम् । नेवारी लिपिः देवनागरी च । पङ्क्तयः ९। आकारः १५½×४½ ग्रन्थसंख्या १२५०० । पत्रसंख्या ३६३। सं ८०८

इति श्रीयदुनाथचक्रवर्तिविरचितामागमकल्पलतायामष्टमः पल्लवः । समाप्तमिदं श्रीआगमकल्पलतातंत्रमिति शिवम् । श्रीमत्त्रिपुरसुन्दरी प्रीतिरस्तु । शुभम् ।

## आगमकल्पलता

क्रमाङ्कः प्र. २२३, विषयाङ्कः २२

ग्रन्थकारः यदुनाथः चक्रवर्ति। नेपालीयं कागजम् । नेवारी लिपिः । पङ्क्तयः ९। आकारः १२½×५½ ग्रन्थसंख्या ९५०० पत्रसंख्या ३५२ । जीर्णोद्धार संवत् १६५५

८ पटलान्ता मध्यखण्डिता ।

## आगमकल्पलता

क्रमाङ्कः प्र. २४६. विषयाङ्कः २३

ग्रन्कारः ... ... । नेपालीयं कागजम् । प्राचीनदेवनागरी लिपिः नेबारीलिपिश्च पंक्तयः— ९ आकारः— १३½×५ । ग्रन्थसंख्या ४८०० पत्रसंख्या १६० । प्रकीर्णरूपाः ।

## आगमज्योतिर्मन्त्रः

क्रमाङ्कः प्र. ३५६, विषयाङ्कः २४

२३ तमपटलात्मकः । ग्रन्थकारः शिवहरिहरशक्तिः, लिपिः नैवारी, पत्रम्—नेपालीयं कागजम्, आकारः ८ ×३ । पङ्क्तः ६ ग्रन्थसंख्या १८० । पत्रसंख्या २०

आरम्भवाक्यम् ।

देव्युवाच ॥ देवदेव महादेव स्थितिप्रलचकारक ।
कथयस्व महेशान आगमज्योतिमु(रु)त्तमम् ॥
यस्यस्मरणमात्रेण गर्भवासविमोचनम् ।
अगम्यागमनं चैव अभक्ष्याभक्षणं तथा ॥

समाप्तिः ।

आयुःकरित्वं पाडित्यं ज्ञाने च अष्टसिद्धिदम् । आगमज्योतिः प्रसादेन लभते नात्र संशयः । इति श्रीहाहारावतन्त्रे अथर्वणसंहितायां पञ्चमखण्डे शिवहरिहरशक्तिविरचिते आगमज्योतिर्मन्त्रे त्रयोविंशतितम पटलः समाप्तं शुभ (?) ॥

अत्र वटुक भैरवस्य अपराजिता, पुरश्चरण संवन्धीनि कतिचन पत्राणि च सन्ति । प्रायेण पुस्तमिदमशुद्धम् ।

## आगमविधानम्

क्रमाङ्कः तृ. ७५६, विषयाङ्कः २५

ग्रथकारः विनायकशर्मा । नेपालीयं कागजम् । देवनागरी लिपिः । पङ्क्तः ५–६ । आकारः १० ×३३/८ । ग्रन्थसंख्या १२५ । पत्रसंख्या ११ लेखसमयः संवत् १९७३ ।

## आचारसारतन्त्रम्

क्रमाङ्कः तृ. ३२५ विषयाङ्कः २६

ग्रन्थकारः…… । नेपालीयं कागजम् । देवनागरी लिपिः । पङ्क्तयः ११ । १२१/८×४१/४ । ग्रन्थसंख्या ३०० । पत्राङ्कः ६५ इत्यतः ७६ पर्यन्तं पत्रसंख्या १२ ।

अत्र पत्राङ्कः ३२ इत्यतः पत्राङ्कः ४४ इत्यस्य पङ्क्तित्रयपर्यन्तं हठप्रदीपिका ततः पत्राङ्कः ६५ इत्यस्य निरङ्कपृष्ठोपान्त्यपङ्क्तिपर्यन्तं शावरीतन्त्रं ततः ७७ तमपत्रस्य निरङ्क पृष्ठीयचतुष्पङ्क्तिपर्यन्तमाचारसारतन्त्रं ततः ८७ तमपत्रस्य निरङ्कपृष्ठपर्यन्तं समयाचारतन्त्रम् ततः ८८ तमपत्रस्य निरङ्कपृष्ठपर्यन्तं रुद्रयामलोक्तपात्रवन्दननवस्तोत्रं ततः

आरभ्य ९१ पत्रपर्यन्तमुल्ककल्पश्चेति कतिपयग्रन्था एकत्र पुस्तके यथाक्रमं लिखिता वर्तन्ते, तेषां नामानि सविवरणं यथास्थानमेव दत्तानि । पत्राङ्कः ३२ इत्यतः पूर्वाणि पत्राणि नोपलब्धानि ।

आदिवाक्यम् ।

श्रीगणेशायनमः ॥ श्रीदेव्युवाच ॥ महाचीनक्रमाचारः सूचितो न प्रकाशितः ॥ इदानीं कथयेशान यदि स्नेहोस्ति मां प्रति ॥

अन्तिमंवाक्यम् ।

.... .... ....

संवत्सरं प्रतिदिनं प्रयतस्त्रिकालं शक्रो निषेव्य विजयां विधिना वसिष्ठ ॥ जित्वा बलासुरमभू (द) थ देवराज(ः) प्रापय्य विश्वशमनस्य स लब्धकामः ॥ एतद्रहस्यमुदितं परमं निगूढं कुत्रापि नैव कमनीयमिदं कदाचित् ॥ उत्कंठया तव मया ननु पूर्ववृत्तं देवि त्वम (या) पि विधिना प्रविधीयतां तत् ॥ ॥

पुष्पिकावाक्यानि—

इत्याचारसारतन्त्रे प्रथमः पटलः ॥
इत्याचारतन्त्रे द्वितीयः " ॥
इत्याचारसारतन्त्रे तृतीयः " ॥
" " चतुर्थः " ॥
" " पञ्चमः " ॥
इत्याचारसारतन्त्रे रहस्यकथने षष्ठः " ॥
इत्याचारसारतन्त्रे हरगौरीसंवादे परमरहस्यातिरहस्यकथने संविदाकल्पे संविच्छोधन-स्वीकारविधिः समाप्तः पटलः ॥ ॥

## आदिवराहतन्त्रम्

क्रमाङ्कः १५२५ विषयाङ्कः २७

ग्रन्थकारः········। नेपालीयंकागजम्, मैथिली लिपिः । पङ्क्तयः ५ । आकारः १३३ x २५ ग्रन्थसंख्या २४० । पत्रसंख्या १३ । पूर्णम् ।

आरम्भः—

ॐ नमः शिवाय । आदिवराहतन्त्रे । पृथिव्युवाच ॥ अनन्तकोटिब्रह्माण्डे तद्बाह्यसंस्थिते विष्णो ···· ।

… … स्थानं परं तेषां प्रधानं प्रियमुत्तमम्
यत्परं नास्ति कृष्णस्य प्रियस्थानं महोत्तमम्
तदहं श्रोतुमिच्छामि कथयस्व महाप्रभो ।

समाप्ति :—

किरीटकुण्डलाद्यैश्च शोभितं वनमालिनम्
पूर्वद्वारे द्वारपालशौरिशङ्खप्रकीर्तितम् (?)
कृष्णवर्णं चतुर्बाहुं शङ्खचक्रादिभूषितम्
दक्षिणद्वारि पालञ्च श्रीविष्णुं कृष्णवर्णकम् । …. …. …. …. …. …. …. ।
इति आदिवराहतन्त्रे श्रीवराहपृथ्वीसंवादे श्रीमद्गोकुलाख्यपरिपूर्णामृतं संपूर्णम् ( १ )।
( अत्रवृन्दावनराधाकृष्णादिपूजामाहात्म्यादिनिरूपणं वर्तते )

## आश्चर्ययोगमाला

विषयाङ्कः २८

क्रमाङ्कः प्र. ३३

ग्रन्थकारः—नागार्जुनः । टीकाकारः–पण्डितश्वेताम्बरः । मध्यदेशीयं कागजम् ।
देवनागरी लिपिः । पङ्क्तयः अनियमिताः । आकारः-- ९३⁄८×४३⁄८ । ग्रन्थसंख्या ७७० ।
पत्रसंख्या २२ । पूर्णा ।

आदिवाक्यम् ।

श्री ॥ सितभानुविटपमूलं मंजिष्ठाभवनचटकं कुष्ठम् ।
स्वाङ्गक्षतभवदिग्धैस्त्रिभुवनमेभिर्वशीकुरुते ॥ १ ॥
तालं पिशाचभवने भूताह्वि प्रेतवदनपर्य्युषितम् ।
रोगेन्द्रसम्प्रयुक्तं त्रिभुवनवशकारकम् ॥ २ ॥

पुष्पिकावाक्यानि ।

इति वश्याधिकारः ।
,, विद्वेषणम् ।
इत्युच्चाटनम् ।
इति दर्पणरूपदर्शनम् ।
,, चित्रान्तर्द्धानम् ।
इत्यदृशीकरणम् ।

इति कुतूहलाधिकारः ।

,, अग्निस्तम्भनाधिकारः ।

,, जलस्तम्भनाधिकारः ।

,, पिशाचीकरणाधिकारः ।

,, शास्त्रस्तम्भाधिकारः ।

,, दूरदेशान्तरगमनम् ।

,, सूर्यचन्द्रकग्रहणाधिकारः ।

,, वेशाधिकारः ।

,, विषप्रयोगाधिकारः ।

,, विषमज्वरोपहारः ।

,, विषमहृतग्रहमोक्षणाधिकारः ।

,, ज्योतिर्दर्शनाधिकारः ।

,, शुक्रस्तम्भनम् ।

,, जलस्तम्भनाधिकारः ।

इति श्रीश्वेताम्बरगुणाकरविरचिता आश्चर्ययोगमालालघुवृत्तिः समाप्ताऽभूत् ।

## आश्चर्ययोगमाला

क्रमाङ्कः द्वि. ८२, विषयाङ्कः २६

ग्रन्थकारः नागार्जुनः । टीकाकारः श्वेताम्बरपण्डितः । मध्यदेशीयं कागजम् । देवनागरी लिपिः । पङ्क्तयः अनियताः । आकारः ११×४ $\frac{3}{8}$ । ग्रन्थसंख्या ६९०। पत्रसंख्या २२ । अपूर्णा ।

## आश्चर्ययोगमाला

क्रमाङ्कः .च विषयाङ्कः ३०

ग्रन्थकारः नागार्जुनः । टीकाकारः पण्डितश्वेताम्बरः । नेपालीयं कागजम् । देवनागरी लिपिः । पङ्क्तयः ७।८ । आकारः १० $\frac{1}{2}$×४ $\frac{1}{2}$ । ग्रन्थसंख्या ३६० । पत्रसंख्या २८ । अन्त्यखण्डिता ।

## इन्द्रजालविद्यासंग्रहः

क्रमाङ्कः तृ. ६३, विषयाङ्कः ३१

ग्रन्थकारः .... .... .... । नेपालीयंकागजम् । नेवारी लिपिः । पङ्क्तयः ७ ।

आकारः १०½×२⅞ । ग्रन्थसंख्या ६० । पत्रसंख्या ३५ । खण्डितोऽपूर्णश्च ।

## ईश्वरविभीषणसंवादरूपम्

किञ्चित्तन्त्रम्

क्रमाङ्कः प्र. १६६७, विषयाङ्कः ३२

ग्रन्थकारः .... .... । ताडपत्राणि । नेवारीलिपिः । पङ्क्तयः ५ । आकारः ११×२ । ग्रन्थसंख्या ४२५ । पत्रसंख्या ३२ । आद्यन्तरहितम् ।

## उग्रचण्डादेव्यर्चनम्

क्रमाङ्कः प्र. २२०, विषयाङ्कः ३३

ग्रन्थकारः .... .... । नेपालीयं कागजम् । नेवारी लिपिः । पङ्क्तयः ६ । आकारः ८¾×३⅜ । ग्रन्थसंख्या २०० । पत्रसंख्या २९ । पूर्णम् ।

## उग्रचण्डाऽयुताक्षरी

क्रमाङ्कः तृ. ६७ विषयाङ्कः ३४

ग्रन्थकारः .... .... । नेपालीयंकागजम् । नेवारीलिपिः । पङ्क्तयः ७ । ग्रन्थसंख्या ३०० । पत्रसंख्या २१ । पूर्णा ।

## उग्रचण्डासहस्राक्षरी

क्रमाङ्कः तृ. ६७ विषयाङ्कः ३५

ग्रन्थकारः .... .... .... । नेपालीयं कागजम् । नेवारीलिपिः । पङ्क्तयः ६ । आकारः ८¾×२¾ । ग्रन्थसंख्या ५० । पत्रसंख्या ६ । पूर्णा ।

## उड्डीशडामरोक्तम् औषधिविधानम्

क्रमाङ्कः प्र. २६५, विषयाङ्कः ३६

ग्रन्थकारः .... .... .... । नेपालीयंकागजम् देवनागरीलिपिः । पङ्क्तयः ५ । ग्रन्थसंख्या २०० । पत्रसंख्या ३५ ।

## उड्डीशतन्त्रम्

क्रमाङ्कः प्र. १६३३, विषयाङ्कः ३७

ग्रन्थकारः .... .... .... । ताडपत्राणि । नेवारीलिपिः । पङ्क्तयः ४।५ । आकारः १२×२¾ । ग्रन्थसंख्या १००। पत्रसंख्या ८ । अपूर्णम् ।

## उड्डीशतन्त्रम्

क्रमाङ्कः ८. ३१७ विषयाङ्कः ३८

ग्रन्थकारः—श्रीनाथः । नेपालीयं कागतम् , देवनागरीलिपिः । पङ्क्तयः ७ । आकारः ९३/४×३३/४ । ग्रन्थसंख्या १५०० । पत्रसंख्या १११ ।

आदिवाक्यम् ।

ॐनमोदुर्गायै ।। प्रणम्य गिरिजा देवं गौरी पृच्छति शङ्करम् । विशेषेणच तत्सर्वं कथयस्व मम प्रभो ।। अत्यन्त विविधंकार्यं कथां कथय भैरव । ईश्वर श्रोतुमिच्छामि लोकनाथ जगत्पते ।। प्रसादं कुरु मे देव ब्रूहि कार्यस्य साधनम् । सुरासुरमहाभाग्य सर्वसिद्धिप्रदायक ।। पृच्छामि त्वां जगन्नाथ संसारस्थितिकारक । पृच्छामि देवदेवेश लोकानां हितकाम्यया ।।

पुष्पिकावाक्यानि ।

इति वीरभद्रतन्त्रे मन्त्रकोषे प्रथमपटलः ।
" द्वितीयः पटलः ।
" तृतीयः पटलः ।
" चतुर्थः पटलः ।
" पञ्चमः पटलः ।
" षष्ठः पटलः ।
" सप्तमः पटलः ।

इति श्रीमहामहोपाध्यायपरिब्राजकाचार्यश्रीश्रीनाथकृते उड्डीशे अष्टमोपदेशः ।। शुभमस्तु ।

## उड्डीशपारमेश्वरतन्त्रम्

क्रमाङ्कः प्र.१६६७ विषयाङ्कः ३६

ग्रन्थकारः— ....... । ताडपत्राणि । नेवारीलिपिः । पङ्क्तयः ५, आकारः १२×२, ग्रन्थसंख्या २३० । पत्रसंख्या २५ । प्रकीर्णम् ।

## उड्डीशपारमेश्वरतन्त्रम्

क्रमाङ्कः प्र. १६३३ विषयाङ्कः ४०

ग्रन्थकारः ........ । ताडपत्राणि । नेवारीलिपिः । पङ्क्तयः ४ । आकारः १२×२,

ग्रन्थसंख्या ४०, पत्रसंख्या, ५, आदिखण्डितम् ।

## उड्डीशसारसङ्ग्रहः

क्रमाङ्कः च. विषयाङ्कः ४१

ग्रन्थकारः— .... ....। ताडपत्राणि । नेवारी लिपिः । पङ्क्तयः ६ । आकारः १२½×२ । ग्रन्थसंख्या ८३५ । पत्रसंख्या ५३ । आदिखण्डितः ।

षष्ठपत्रे आदिवाक्यम् ।

अतः परं प्रवक्षामि विविधरोग श्रमधन । तत्र नानाव्याधिकरणः ज्वरकरणः ज्वालाग्नि-स्तम्भनं ॥ विविधोच्चाटनं प्रभृतिमं अरिमारनादि उडीशोपरि व्या(ख्या) स्यामः ॥

पुष्पिकावाक्यानि ।

इति उड्डीसमाहेश्वरोक्तस्वस्वप्रयोगोनाम प्रथमपटलः । इति उड्डीशते गदासंजोग द्वितीयपटलः ।

ज्वरपटल समाप्त ।

प्रत्यालयग्रहपटल ।

उच्चाटनपटल ।

विद्वेषनपटल ।

उच्छादन पटल ।

शत्रुसेनाछादनो नाम ।

जलस्तम्भनं ।

अग्निस्तम्भनं ।

अगदमन्त्रपटल ।

साधनपटलः ।

पादप्रचारपटलः ।

इति केशरञ्जनप्रयोग समाप्त ।

इति ग्रहस्थोपनप्रयोग समाप्त ।

इति ग्रभ( गर्भ )स्रावनप्रयोग समाप्त ।

इति ग्रभ( गर्भ )नासनप्रयोग समाप्तः ।

इति गाढीकरण : ।

" रसायन विधानेति।

" वाजीकरणप्रयोग ।

" उड्डीशभैरवभाषितेस्त्रियोगमनामः ।

उड्डीशभैरवभाषिते महागमे महातन्त्रे वशीकरणप्रयोगपटल समाप्तः ।

" उड्डीशभैरवभाषिते उच्चाटनोमारणोनाम पटल समाप्तः ।

इत्याग्निस्तम्भनपटलः ।

" उड्डीशपरमेश्वरमहातन्त्रे स्तम्भन पटलः ।

" परसैन्यस्तम्भनः स्वसैन्यरक्षन्योनाम पटल समाप्तः ।

" उड्डीशआगमे षष्ठमपटल समाप्तः ।

" ऊड्डामरे जक्षसाधनं

" मन्त्रपटलः ।

" रक्षाविधिः ।

" कालोत्तरे स्तम्भनः पटल ।

" उड्डीशमहाशान्तिमूर्त्तचर्वच्चर्न कालवञ्चन समाप्त ।

" उड्डीशपारमेश्वरमहातन्त्रे महागमे चतुर्विंशतिसारसङ्ग्रहे सारात्सारसंग्रहे ऊड्डीशोनाम-पटलः समाप्तमिदं ॥

समयः ।

श्रेयोऽस्तु सम्वत् ५३४ कार्तिकशुक्ल प्रतिपदायां तिथौ विशाखनक्षत्रे आयुष्मान-योगे विरवासरे श्रीराजाधिराजपरमेश्वरपरमभट्टारकदैत्यनारायणश्रीश्रीजयज्योतिमल्ल-देवानां राज्यविजयराज्ये लिखितमिद उड्डामरशास्त्रं श्रीमानीग्लके श्रीदक्षिणविहारे श्रीयोथोविहारकुटुंम्वजप्रधानोङ्गमूत्यङ्गपात्रश्रीजयतेजनायकस्यः परार्थहेतु द्विजवरोत्तम श्रीमनकुसोमशर्मनस्यार्थे लिखितमिदंशास्त्रं । [ पुस्तकमिदमशुद्धप्रायम् ]

## उड्डीशसारसंग्रहः

क्रमाङ्कः प्र. १३३६ विषयाङ्कः ४२

ग्रन्थकारः—श्रीमहाभैरवः । नेपालीयं कागतम् । नेवारीलिपिः । पङ्क्तयः ६-७ ।

आकारः ८३/४×३ । ग्रन्थसंख्या ४२० । पत्रसंख्या ३० । आदिखण्डितः ।

## उत्तरतन्त्रम् ( पुरश्चरणविधायक१४तमपटलात्मकम् )

( दक्षिणकालीस्तवश्च )

क्रमाङ्कः तृ. २५४, विषयाङ्कः ४३

ग्रन्थकारः .... .... , नेपालीयं कागतम् , देवनागरी लिपिः, पङ्क्तयः ८, आकारः १०$\frac{3}{4}$×३$\frac{1}{2}$, ग्रन्थसंख्या ६०, पत्रसंख्या ३ ।

आदिवाक्यम् ।

ॐ श्रीगुरुवे नमः ॥ ॥ उत्तरतन्त्रे ॥ श्रीदेव्युवाच ॥ भगवन्सर्वमाख्यातं मंत्रादिकं सुविस्तरम् । पुरश्चर्याविधानं च वीरसाधनमुत्तमम् ॥

पुष्पिकावाक्यम् ।

इत्युत्तरतन्त्रे पुरश्चरणविधायक(ः)चतुर्दशः पटलः ।

इति दक्षिणकालीस्तवम् ।

## उद्दण्डभैरवतन्त्रम् ( लिङ्गयन्त्रार्चनरूप६६तमपटलात्मकम् )

क्रमाङ्कः तृ. २५१, विषयाङ्कः ४४

ग्रन्थकारः .... .... , नेपालीयं कागतम् , देवनागरी लिपिः, पङ्क्तयः ७, आकारः ११$\frac{1}{2}$×४$\frac{3}{4}$, ग्रन्थसंख्या १३, पत्रसंख्या २ ।

इति श्रीउद्दण्डभैरवीये षष्टिसाहस्रे षट्शांभवरहस्ये यन्त्रपारायणक्रमे महानिर्वाणमोक्षसाधने लिङ्गयन्त्रार्चनं नाम षट्षष्टितमः पटलः ।

## उद्धारकोशः

क्रमाङ्कः तृ. ८०, विषयाङ्कः ४५

ग्रन्थकारः इन्दुमौलिः । नेपालीयं कागतम् । देवनागरी लिपिः । पङ्क्तयोऽनियताः । आकारः ९×४ , पत्रसंख्या ५४ , ग्रन्थसंख्या १००० , कीटदष्टो जीर्ण : ॥

आदिवाक्यम् ।

श्रीगणेशायनमः ॥ उद्दिश्य यं कृतवती गिरिजा तपस्यां यत्पादपङ्कजरजो विबुधा नमंति । आशाम्बरं भुजगराजविभूषिताङ्गं तं चन्द्रचूडमतुलं मनसा स्मरामि ॥ एकदा स्फाटिको बिभृत्सानौ वनसमाकुले । संस्थितौ पार्वतीशंभू लोकरक्षणतत्परौ ॥ पार्वती परमेशानं प्रोवाच वचनं हितम् । देव देव सुरश्रेष्ठ दयात्रैगुण्यमानसः ॥ देवी भगवती देव महानीलसरस्वती । अस्मिंश्चराचरेऽव्यक्ते क्रूरे केन प्रकाशिता ॥ ईश्वरउवाच ॥ नष्टे

सृष्टि महादेवी नष्टे स्थावरजङ्गमे । वृहदारुण्यको नाम सृष्टे पूर्वं महत्तरम् (?) ॥

पुष्पिकावाक्यानि ।

इति श्रीहरगौरीसंवादे उद्धारकोशे सकलागमसारे दशविद्यामन्त्रोद्धारनाम प्रथमः कल्पः ।

| | | | |
|---|---|---|---|
| " | " | " | ताराभेदकथनं नाम द्वितीयः कल्पः । |
| " | " | " | काल्याभेदकथनं नाम तृतीयः कल्पः । |
| " | " | " | छिन्नमस्ताया भेदकथनं नाम चतुर्थः कल्पः । |
| " | " | " | पञ्चमः कल्पः । |
| " | " | " | षष्ठः कल्पः । |
| " | " | " | त्रिपुराबालाया मन्त्रकथनं नाम सप्तमः कल्पः । |
| " | " | " | अष्टमः कल्पः । |
| " | " | " | रुद्रपरिवारकथनं नाम नवमः कल्पः । |
| " | " | " | दशमः कल्पः । |
| " | " | " | सप्तबालककथनं नाम दशमः कल्पः । |
| " | " | " | एकादशः कल्पः । |
| " | " | " | द्वादशः कल्पः । |
| " | " | " | त्रयोदशः कल्पः । |
| " | " | " | चतुर्दशः कल्पः । |
| " | " | " | पञ्चदशः पटलः । |
| " | " | " | षोडशः कल्पः । |
| " | " | " | सप्तदशः कल्पः । |
| " | " | " | अष्टादशः कल्पः । |
| " | " | " | एकोनविंशः कल्पः । |

श्रीगौरीश्वरसूनुगोकुलविलासस्यात्मजेनाजसा तस्यैयोऽनुजमध्यमस्य तदवद्विद्या प्रसादोंनते । विद्यातस्य जगन्निवासविदुष छात्रेण संकलिपते शास्त्रे तन्त्रनिवन्धके समगमत् कल्पोऽद्य विंश स्फुटम् । बाणकालरसेन्दु १६६५ च स शाके गुरुवेश्मनी । लिखितं पुस्तकमिदं स्वहस्ताक्षरपण्डितः । आषाढ स्ति पक्षे पञ्चम्यां बुधवासरे । यदि शुद्धमशुद्धं वा शोधनायं सुहज्जनैः ॥

## उद्धारकोशः

क्रमाङ्कः तृ. ८०, विषयाङ्कः ४६

ग्रन्थकारः— इन्दुमौलिः, नेपालीयं कागतम्, देवनागरी लिपिः, पङ्क्तयः ७, आकारः ११$\frac{3}{8}$×४$\frac{3}{4}$, ग्रन्थसंख्या ९००, पत्रसंख्या ७१ ।

## उद्धारकोशः

क्रमाङ्कः प्र. १६९७, ख. का. ( ३-४ ) विषयाङ्कः ४७

ग्रन्थकारः दक्षिणामूर्त्तिः, नेपालीयं कागतम्, नेवारी लिपिः, पङ्क्तयः ९, आकारः १०×६$\frac{3}{4}$, ग्रन्थसंख्या २००, पत्रसंख्या ८, आदिमध्यान्तखण्डितः ।

## ऋषीश्वरमतम्

क्रमाङ्कः तृ. ७८, विषयाङ्कः ४८

ग्रन्थकारः .... ...., मध्यदेशीयं कागतम्, देवनागरी लिपिः, पङ्क्तयः १२, आकारः ९$\frac{3}{4}$×३$\frac{3}{4}$, ग्रन्थसंख्या ४०, पत्रसंख्या २ ।

## एकपञ्चाशद्विद्योत्पत्तिः

क्रमाङ्कः तृ. २५१, विषयाङ्कः ४९

ग्रन्थकारः .... ..., मध्यदेशीयं कागतम्, देवनागरी लिपिः, पङ्क्तयः १०, आकारः १२$\frac{3}{4}$×४$\frac{1}{8}$, ग्रन्थसंख्या ५४, पत्रसंख्या ३ ।

आदिवाक्यम् ।

मातः परापरे देवी सर्वज्ञानमयीश्वरी । कथ्यतां मे सर्वपीठशक्तिभैरवदेवताः ॥ श्रीदेव्युवाच ॥ शृणु देवी प्रवक्ष्यामि दयालो भक्तवत्सलः । याभिर्विना नसिद्ध्यन्ति जपसाधनतत्क्रियाः ॥ एकपञ्चाशतं पीठं शक्तिभैरवदेवता । अंगप्रत्यंगवातेन विष्णुचक्रक्षतेन च ॥ नमस्य वपुषा देवी हिताय त्वयि कथ्यते ।

पुष्पिकावाक्यम्

इति तन्त्रचूडामणौ पार्वतीश्वरसंवादे एकपञ्चाशद्विद्योत्पत्तौ पीठनिर्णयः समाप्तः ।

## एकाक्षरीकर्मानुष्ठानं प्रातःकृत्यादिविभूतिस्नानञ्च

क्रमाङ्कः तृ. ४२ विषयाङ्कः ५०

ग्रन्थकारः .... । नेपालीयं कागतम् । देवनागरी लिपिः । पङ्क्तयः ९ । आकारः १०×४$\frac{1}{2}$ । ग्रन्थसंख्या २०० । पत्रसंख्या ४२ अपूर्णम् ।

आरम्भवाक्यम् ।

श्रीगणेशायनमः ॥ श्रीमदेकाक्षरीकर्म्मानुष्ठानं निर्व्वाणश्रीगुह्यकाल्याः श्रीमद्भद्रकाली तन्त्रोक्तं शंकराचार्यो वशिष्ठाय प्राह यत् तत्प्रकटीकरोति वडवानलभैरवः स्वशक्त्यै चेति सूत्रं ॥ सूत्रार्थमपि तस्यै वदति ॥ तद्यथा ॥ श्रीगुह्यभैरवाश्लिष्टां सर्व्वमङ्गलभाजितां ॥ मातरं जगतां साक्षाद्गुह्यकालीं चिदात्मिकाम् ॥ आदौ संस्मृत्य शयनादुत्थायागमपारगः । सर्वदुःखोपशान्त्यर्थं प्रातःकृत्यं पुनर्भजेत् ॥

पुष्पिकावाक्यानि ।

इति श्रीउत्तराम्नायमहानिर्व्वाणमहातन्त्रे श्रीमदेकाक्षरीमहाविद्यायाश्चतुर्थप्रकरणोरक्तप्रातः कृत्यविधि : समाप्तः ।

## करवीरयागः ( परातन्त्रम् )

क्रमाङ्कः प्र. २२

विषयाङ्कः ५१

ग्रन्थकारः —, मध्यदेशीयं कागतम्, देवनागरी लिपिः, पङ्क्तयः ९, आकारः ८$\frac{3}{4}$×३$\frac{1}{2}$, ग्रन्थसंख्या ६००, पत्रसंख्या ३०, शकसंवत् १६८१ पूर्णम् ।

आरम्भः ।

ॐनमः श्रीपरायै ॥ बहुसिद्धिसमाकीर्णश्मशाने करवीरके । तत्र वीरगणाः सर्वे महा हल्लोलहुंकृते ॥ निवर्तितमहाचक्रे यागे त्रिदशडामरे । महावृन्दमहास्फारगण डाकिनीयाचिते ॥ ब्रह्माद्या मातरश्चाष्टौ क्षेत्रेशा भैरवादयः । गणेशा वटुकाः सिद्धा मातचक्रे तु मेलके ॥

समाप्तिः ।

विभिन्ना बहुधा जाता नानाभेदसमाश्रिता । एकाशा बहुरूपा च यानीया दिव्यचक्षुषा ॥ सएव साधकः श्रेष्ठः सिद्धिज्ञानस्य भाजनम् । अनुष्ठानरतः सर्वसिद्धिभागी भवेद्ध्रुवम् ॥ इति श्रीभैरवश्रो(स्रो)तसि शिरश्छेदे महाकरवीरयागे परातन्त्रे कालीकुलक्रमः समाप्तम् ( : ) ॥ ॥ यादृशं पुस्तकं दृष्ट्वा तादृशं लिखितं मया । यदिशुद्ध मशुद्धं वा ममदोष ( ो ) नदि ( दी ) यते श्रीशाके १६८१ मासे १ ग्रामे राजस्थान तनहुँः लिखितं श्रीनन्दशर्मणा ।

पुष्पिकावाक्यानिः ।

इति श्रीषट्साहस्रे परातन्त्रे करवीरयागे पूर्णेश्वरीपूर्वाम्नाय(ःप्रथम(ः)

इति श्रीषट्साहस्रे परातन्त्रे करवीयागे दक्षिणम्ना(य)निःश्रेश्वरी(?)द्वितीयः ।

इति " पश्चिमाम्नायसिंहासनं तृतीयः ।

इति " उत्तराम्नायकालिक्रमः ।

इति " श्रीविद्यापञ्चसिंहासनं ( म् ) ।

इति " षडाम्नायक्रमसूत्रः षष्ठमः ( ? ) ।

इति श्रीमहास्रोतसि शिरश्छेदे करवीरयागे परातन्त्रे क्रमद्वादशसाहश्रि(स्रि)कायां कालिक्रमनिर्णयसूत्रम् ।

इति श्रीभैरवस्रोतसि शिरश्छेदे करवीरयागे परातन्त्रे परमार्थनिर्णयः ।

इति श्रीभैरवश्रो(स्रो)तसि शिरश्छेदे महाकरवीरयागे परातन्त्रे कालिकुलक्रमः समाप्तम्(:) ।
पुस्तकमिदं तनहुँराजत्रिविक्रमसेनपुत्रकामारिदत्तसेनस्येत्यन्तिमपत्राभिलेखात् प्रतीयते ।

## करवीरयागः

क्रमाङ्कः प्र.१२८, विषयाङ्कः ५२

ग्रन्थकारः .... ...., नेपालीयं कागतम्, नेवारी लिपिः, पङ्क्तयः ७, आकारः ८½×४, ग्रन्थसंख्या ६००, पत्रसंख्या ४८, पूर्णः ।

## करवीरयागः

क्रमाङ्कः प्र. १२८, विषयाङ्कः ५३

ग्रन्थकारः .... ...., नेपालीयं कागतम्, नेवारी लिपिः, पङ्क्तयः ७, आकारः ८½×३, ग्रन्थसंख्या ६००, पत्रसंख्या ८८, समयः— नेवारी संवत् ७२३ ।

## करवीरयागः

क्रमाङ्कः प्र. ८६, विषयाङ्कः ५४

ग्रन्थकारः .... ...., नेपालीयं कागतम्, नेवारी लिपिः, पङ्क्तयः ७, आकारः ८½×३¾, ग्रन्थसंख्या ५५८, पत्रसंख्या ४९, पूर्णः ।

## करवीरयागः

क्रमाङ्कः प्र. २३३ विषयाङ्कः ५५

ग्रन्थकारः .... । नेपालीयं कागतम् । नेवारी लिपिः । पङ्क्तयः ७ । आकारः १०½×३ । ग्रन्थसंख्या ६०० । पत्रसंख्या ५२ ।

## करवीरयागः

क्रमाङ्कः प्र. ६६६ विषयाङ्कः ५६

ग्रन्थकारः...., नेपालीयं कागतम् । नेवारी लिपिः, पङ्क्तयः १०, आकारः १५½×४⅞, ग्रन्थसंख्या ६५० , पत्रसंख्या १४ , नेवारी संवत् ८१० , आदिखण्डितः ।

## करवीरयागः

क्रमाङ्कः प्र. १६२७, विषयाङ्कः ५७

ग्रन्थकारः .... .... , नेपालीयं कागतम, देवनागरी लिपिः, पङ्क्तयः ५, आकारः १०×२¾, ग्रन्थसंख्या ४८०, पत्रसंख्या ३६, आदिखण्डितः ।

## करवीरयागोक्तकालीकुलक्रमः

क्रमाङ्कः प्र. ३५५, विषयाङ्कः ५८

ग्रन्थकारः .... .... , नेपालीयं कागतम् , नेवारी लिपिः, पङ्क्तयः ७।८, आकारः ९×३¼, ग्रन्थसंख्या २३०, पत्रसंख्या ४० ।

## कर्मसारमहातन्त्रम्

क्रमाङ्कः तृ. २४८, विषयाङ्कः ५९

ग्रन्थकारः .... ... , नेपालीयं कागतम् , नेवारी लिपिः, पङ्क्तयः ८, आकारः ११½×३½, ग्रन्थसंख्या १००००, पत्रसंख्या ३८०, २८ उल्लासान्तं मध्यखण्डितम् ।

आदिवाक्यम् ।

ॐ नमोनिरञ्जनमहाभैरवाय ।। आब्रह्मस्तम्भ(म्ब)पर्यन्तं संसारार्णवगोचरम् । निःप्रपञ्च निराधारं वन्दे व्योम्निपरात्परम् ।। यस्तं शिवं केवलचित्स्वरूपं सूर्येन्दुवैश्वानरमण्डलस्थं । गुरुप्रसादात्त्रिमलं क्षयित्वा ज्ञात्वा यजेन्मोक्षसुखं स याति ।। श्रीनाथं ब्रह्मरुद्रं दिनकर-किरणं चन्द्रविम्बं ललाटे आनन्दं व्यो मपीठं वहुविधिरचितं सर्वमन्त्राधिकारम् । नाथं प्रत्यक्षयोगं ग्रहगणनिलयं पावकं क्रूरदंष्ट्रं नानारुद्रावतारं त्रिभुवनरचितं भैरवं तं नमामि ।। क्षोणीवारिमहार्चिवायुहसधासम्वर्तमर्मालकै रन्धै(ः)पिण्डसुपिण्डितं भवगतं व्यस्तं समस्तं परम् । एतत्तत्वमखण्डितं श्रुतिलया तूष्णीं प्रभानिष्कलं स्वर्गःशून्यमगोचरः परधियां सम्भावमात्रः शिवः ।

पुष्पिकावाक्यानि ।

इति श्रीकर्मसारमहातन्त्रे देव्यासूत्रनिर्णयो नाम प्रथमपटलः ।

इति श्रीकर्मसारमहातन्त्रे प्रभावितं नाम द्वितीयोल्लासः ।

„ „ स्नानादिकं नाम तृतीयोल्लासः ।

„ „ सन्ध्यातर्पणादिकं नाम चतुर्थोल्लासः ।

„ „ पार्थिवलिङ्गपूजादिकं नाम पञ्चम उल्लासः ।

„ „ लिङ्गार्चनादिकं नाम षष्ठः उल्लासः ।

„ „ पूजासूत्रादिकं नाम सप्तमोल्लासः ।

„ „ अष्टमः उल्लासः ।

„ „ नवमः उल्लासः ।

„ „ दशमः उल्लासः ।

„ „ एकादशः उल्लासः ।

„ „ द्वादशः उल्लासः ।

„ „ त्रयोदशः उल्लासः ।

„ „ चतुर्दशः उल्लासः ।

„ „ पञ्चदशः उल्लासः ।

„ „ षोडशः उल्लासः ।

„ „ सप्तदशः उल्लासः ।

„ „ अष्टादशः उल्लासः ।

„ „ एकोनविंशः उल्लासः ।

„ „ विंशतितमः उल्लासः ।

„ „ एकविंशतितमः उल्लासः ।

„ „ द्वाविंशतितमः उल्लासः ।

„ „ त्रयोविंशतितमः उल्लासः ।

„ „ चतुर्विंशतितमः उल्लासः ।

„ „ पञ्चविंशतितमः उल्लासः ।

„ „ षट्विंशतितमः उल्लासः ।

„ „ सप्तविंशतितमः उल्लासः ।

इति श्रीकर्मसारमहातन्त्रे योगाधिकारोनाम अष्टाविंशतितमः उल्लासः । गते नेपालिके

वर्षे ७१० शून्यात्माब्धियुतेष्वसौ । ज्येष्ठमासेसितेपक्षे सम्पूर्णे मङ्गले दिने ॥ विप्र नारायणं कृत्य शिव नाम लिलेखत । भवानीशङ्करौ प्रीतौ संपूर्णं लिखितं त्विदम् ।

## कल्पचिन्तामणिः

क्रमाङ्कः प्र. १६६७, विषयाङ्कः ६०

ग्रन्थकारः ···· , नेपालीयं कागतम् , देवनागरी लिपिः , पङ्क्तयः ९–१०, आकारः १६$\frac{1}{10}$×४$\frac{4}{5}$, ग्रन्थसंख्या ४०, पत्रसंख्या २, अपूर्णचतुर्थपटलान्तः ।

अन्तिमपुष्पिका:—

इति श्रीचिन्तामणिकल्पे उमामहेश्वरसंवादे चतुर्थपी(ठि)कायां तृतीयः पटलः ॥

## कामकलाकालीप्रातःकृत्यम्

क्रमाङ्कः तृ. ४६ विषयाङ्कः ६१

ग्रन्थकारः ···· ····, नेपालीयं कागतम् , देवनागरी लिपिः, पङ्क्तयः ४।५, आकारः ७$\frac{३}{८}$×३$\frac{१}{४}$, ग्रन्थसंख्या १२५, पत्रसंख्या ४५ ।

## कामकलाकालीमन्त्रभेदाः

क्रमाङ्कः तृ. ४३, विषयाङ्कः ६२

ग्रन्थकारः ···· ····, नेपालीयं कागतम् , देवनागरी लिपिः, पङ्क्तयः ८, आकारः १०×४$\frac{७}{८}$, ग्रन्थसंख्या १५०, पत्रसंख्या २१ ।

आदिवाक्यम् ।

श्रीगणेशायनमः ॥ ॥ तोडलातंत्रे ॥ कोटिजन्मार्ज्जितैः पुण्यैर्लभ्यते ॥ कलौकाम कलाकाली त्रिषु लोकेषु दुर्लभा ।

अन्तिमवाक्यम् ।

एभिर्म्मन्त्रैस्तु देवेशि साधयेत्कामकालिकां ॥ इति कामकलामन्त्रभेदाः ।

## कामकलाकालीमन्त्रभेदाः

क्रमाङ्कः तृ. ४३, विषयाङ्कः ६३

ग्रन्थकारः ····, । नेपालीयं कागतम् , देवनागरी लिपिः, पङ्क्तयः ६।७, आकार १०$\frac{३}{४}$×४$\frac{२}{१}$, ग्रन्थसंख्या १३२' पत्रसंख्या ९ ।

## कामकलाकालीमृत्युञ्जयप्राणनामायुताक्षरी

क्रमाङ्कः प्र. ८६, विषयाङ्कः ६४

ग्रन्थकारः ........, नेपालीयं कागतम् , नेवारी लिपिः, पङ्क्तयः ६, आकारः ८$\frac{7}{8}$×३$\frac{3}{4}$, ग्रन्थसंख्या २००, पत्रसंख्या २१, आदिमध्यखण्डिता ।

अन्त्यवाक्यम् ।

किं किंविलम्वसे भगवती शुष्कानिनि खखख अन्त्रकरावलद्धे भोभोवलावला कृष्ण भुजङ्ग वेष्टित ततुलम्वकपाले उज्ज २ हट्ट २ पत २पताका हस्ते ज्वल २ ज्वालामुखि अ ननन खट्वांगधारिणि वाहाहा चट्ट २ हूँहूँ अट्टहासिनि ।

इति महाकाल संहितोक्तका मिकलाकालीमृत्युञ्जयप्राणनामायुताक्षरी समाप्ता ।

संवत ७८५ ज्येष्ठमासे कृष्णपक्षे द्वादश्यां तिथौ बुधवासरे एतानि दिनेषु श्रीगोपालशर्मणा लिखितं पूर्णम् ॥ शुभम् ॥

## कामकलाकालीमृत्युञ्जयप्राणानामायुताक्षरी

क्रमाङ्कः प्र. १४६१ विषयाङ्कः ६५

ग्रन्थकारः........, नेपालीयं कागतम् , नेवारी लिपिः, पङ्क्तयः ८, आकारः ९$\frac{1}{4}$×३$\frac{3}{4}$, ग्रन्थसंख्या ३२५ । पसंत्रख्या १९ । ने. सं. ८७० पूर्णा ।

## कामकलाकालीमृत्युञ्जयप्राणानामायुताक्षरी

क्रमाङ्कः प्र. ६६, विषयाङ्कः ६६

ग्रन्थकारः .... , नेपालायं कागतम् , नेवारी लिपिः, पङ्क्तयः ८, आकारः ११$\frac{1}{2}$×३$\frac{3}{4}$, ग्रन्थसंख्या ३००, पत्रसंख्या १८, पूर्णा ।

## कामकलाकालीमृत्युञ्जयप्राणायुताक्षरीमन्त्रोद्धारः ।

क्रमाङ्कः द्वि २६४, विषयाङ्कः ६७

ग्रन्थकारः...., नेपालीयं कागतम् , मैथिली लिपिः, पङ्क्तयः ८ , आकारः १०$\frac{1}{4}$×३$\frac{3}{4}$, ग्रन्थसंख्या ४५०, पत्रसंख्या २२, अपूर्णः ।

## कामकलाकालीसहस्राक्षरीमन्त्रोद्धारः

क्रमाङ्कः तृ, २८ विषयाङ्क ६८

ग्रन्थकारः .... , नेपालीयं कागतम् , नेवारी लिपिः, पङ्क्तयः ८, आकारः ९$\frac{3}{8}$×३$\frac{3}{8}$ ग्रन्थसंख्या १००, पत्रसंख्या ६, पूर्णः ।

## कादिमतम्

( षोडशनित्यातन्त्रीयम् )

क्रमाङ्कः प्र. ११५२ विषयाङ्कः ६६

ग्रन्थकारः ...., ताडपत्राणि, मैथिली लिपिः, पङ्क्तयः ५, आकारः १५$\frac{1}{2}$×३$\frac{1}{2}$, ग्रन्थसंख्या ९००, पत्रसंख्या ५५, आदिमध्यान्तखण्डितम् ।

## कामरत्नतन्त्रम्

क्रमाङ्कः तृ.६१६ विषयाङ्कः ७०

ग्रन्थकारः श्रीनाथः , नेपालीयं कागतम् , देवनागरी लिपिः, पङ्क्तयः ८, आकारः १०$\frac{3}{4}$×४$\frac{4}{5}$, ग्रन्थसंख्या १६४८, पत्रसंख्या ९८, मध्ये पत्रपञ्चकं खण्डितम् ।

आदिवाक्यम् ।

श्रीगणेशाय नमः ।। ।।यस्येश्वरस्य विमलं चरणारविन्दं संसेव्यते विबुधसिद्धमधुव्रतेन ।। निर्वाणसूचकगुणाष्टकरंङ्गपूर्णं तं शंङ्करं सकलदुःखहरं नमामि ॥ १ ॥ कामरत्नमिदं चित्रं नानातंत्रांतरान्मया ।। वश्यादियक्षिणीमंत्रसाधनांतं समुद्धृतं ॥ २ ॥

पुष्पिकावाक्यानि ।

इति श्रीनाथविरचिते कामरत्ने वशीकरणं नाम प्रथमोपदेशः ।

,, ,, आकर्षणं नामद्वितीयोध्यायः ।

,, ,, विजयादिव्याघ्रनिवारणं नामतृतायोपदेशः ।

इति श्रीकामरत्ने स्तम्भनं नाम चतुर्थोपदेशः ।

इति श्रीनाथविरचिते कामरत्ने अरिष्टनाश नं दुग्धवर्द्धनं नामनवमोपदेशः ।

,, ,, नानाकौतुकं नाम एकादशोध्यायः ।

,, ,, सिद्धादि अनावृष्टिनिवारणं न ादशपरिच्छेदः

,, ,, निधिदर्शनांजनादिमृतसंजीवनंनोमत्रयोदशोध्यायः

,, ,, विषनिवारणं नाम चतुर्दशोपदेशः ।

,, ,, यक्षिणीसाधनं नाम पञ्चदशोध्यायः ।

समयः—

रणोद्योगसाहः श्रियोद्द्योतमानः क्षमाधर्मराजः समेधर्मराजः ॥ वचोधर्मराजो धने राजराजो यशोरात्रिराजः सदा धर्मराजः ॥ १ ॥ तदाज्ञासहर्षोऽमृतानन्दमूर्खोऽलिखत् काम-

रत्नं भिषक्चित्तरत्नं ॥ शकेऽब्दे कुमाराननाग्न्यद्रिचन्द्रा १७३६ ङ्किते पौषशुक्ले दिनेशीय-
तिथ्याम् ॥ २ ॥

## कामरत्नतन्त्रम्

क्रमाङ्क :तृ.१०८ विषयाङ्कः ७१

ग्रन्थकारः श्रीनित्यनाथः , नेपालीयं कागतम् , देवनागरी लिपिः , पङ्क्तयः ११ , आकारः १० $\frac{३}{४}$×४$\frac{१}{४}$ , ग्रन्थसंख्या ...., पत्रसंख्या ६२, अपूर्णम् ।

## कामाख्यातन्त्रम्

क्रमाङ्कः तृ. २४१ विषयाङ्कः ७२

ग्रन्थकारः ...., नेपालीयंकागतम् , देवनागरी लिपिः , पङ्क्तयः ७ , आकारः १४×४$\frac{३}{४}$, ग्रन्थसंख्या ४८० , पत्रसंख्या २५ ।

आदिवाक्यम् ।

ॐनमःकामाख्यै(ख्यायै)॥ श्रीदेव्युवाच ।।भगवन् सर्वधर्मज्ञ सर्वविद्याप्रियःप्रभो । सर्वज्ञानन्द हृदयः सर्वागमविकाशक ॥ श्रुतानि सर्वतन्त्राणि साधनानि च सर्वशः । विद्यास्ताः सकला देव फलानि त्वत्प्रसादतः । सारात्सारतरं तन्त्रं जानासि किं वद प्रभो ॥ श्रीशिव उवाच ॥ शृणु देवि सदा भद्रे मदीयप्राणवल्लभे । योनिरूपा महाविद्या कामाख्या वर दायिनी ।।

पुष्पिकावाक्यानि ।

इति कामाख्यातन्त्रे देवीश्वरसंवादे प्रथमः पटलः ।

" " द्वितीयः पटलः ।

" " तृतीयः पटलः ।

" " चतुर्थः पटलः ।

" " पञ्चमः पटलः ।

" " षष्ठः पटलः ।

" " सप्तमः पटलः ।

" " अष्टमः पटलः ।

इति कामाख्यातन्त्रे देवीश्वरसंवादे नवमः पटलः ।

## कामाख्यातन्त्रम्

[ प्रथमपटलात्मकम् )

क्रमाङ्कः तृ. १ विषयाङ्कः ७३

ग्रन्थकारः ····, मध्यदेशीयं कागतम् , देवनागरी लिपिः, पङ्क्तयः ११, आकारः $१३\frac{3}{४}\times५\frac{1}{४}$, ग्रन्थसंख्या २५, पत्रसंख्या २ ,

## कार्त्तवीर्यचक्रन्यासः

क्रमाङ्कः द्वि. १४१ विषयाङ्कः ७४

ग्रन्थकारः····, मध्यदेशीयं कागतम् , देवनागरी लिपिः, पङ्क्तयः ७, आकारः $८\frac{१}{८}\times४\frac{3}{4}$, ग्रन्थसंख्या ९०, पत्रसंख्या ७ ।

## कालज्ञानम्

क्रमाङ्कः तृ १६२ विषयाङ्कः ७५

ग्रन्थकारः शम्भुनाथः, ताडपत्राणि, नेवारी लिपिः , पङ्क्तयः ४, आकारः $१०\frac{१}{८}\times२$, ग्रन्थसंख्या १७, पत्रसंख्या ३ ,

## कालाग्निरुद्रम्

क्रमाङ्कः प्र ६८ विषयाङ्कः ७६

ग्रन्थकारः ····, नेपालीयं कागतम् , देवनागरी लिपिः , पङ्क्तयः ७ , आकारः $१०\frac{१}{८}\times३\frac{५}{८}$, ग्रन्थसंख्या ६० , पत्रसंख्या ५, आदिखण्डितम् ।

## कालानलतन्त्रम्

क्रमाङ्कः तृ २६६ विषयाङ्कः ७७

ग्रन्थकारः ····, नेपालीयं कागतम् , नेवारी लिपिः , पङ्क्तयः ९, आकारः $१४\frac{3}{४}\times४\frac{१}{४}$, ग्रन्थसंख्या १०००, पत्रसंख्या ७०, मध्ये (पत्रमेकं) खण्डितम् जीर्णम् ।

आदिवाक्यम् ।

ॐनमः श्चण्डकापालिन्यै ॥ गते कृतयुगस्यार्द्धे भगवान्नीललोहितः नारदायावदत्पृष्टस्तन्त्रं कालानलं पुरा ॥ शाण्डिल्याय स चोवाच देवलायासिताय च । यत्रा(?)मेरुपृष्टे सुखासीनानेतानाङ्गिरसःकवि ॥ अभ्याजगाम सम्वर्त्तो जिज्ञासुस्तन्त्रमुत्तमं । कालानलाव्हयं गोप्यं यामलादुद्धृतं हि यत् ।

पुष्पिकावाक्यानि ।

इति श्रीनीललोहितीये कालानलतन्त्रे प्रथमः पटलः ।

इति श्रीनी० बीजकथनं नाम द्वितीयः पटलः ।

" कूटकथनं नाम तृतीयः पटलः ।

" नवाक्षरादिसहस्राक्षरीपर्य्यन्तमन्त्रोद्धारकथनं नाम चतुर्थः पटलः ।

" दीक्षाकोलकथनं नाम पञ्चमः पटलः ।

" चक्रकथनंनाम षष्ठः पटलः ।

" दीक्षाप्रकरणे सर्वतोभद्रमण्डलकथनं नाम सप्तमः पटलः ।

" " " पूजाकथनं नाम अष्टमः पटलः ।

" कलावतीदीक्षाविधिकथनं नाम नवमः पटलः ।

" पूर्वाह्णकृत्यकथनंनाम दशमः पटलः ।

" विभूतिधारणंनाम एकोदशः पटलः ।

" नित्यपूजायां द्वादशतमः पटलः ।

" नित्यपूजाप्रकरणे त्रयोदशतमः पटलः ।

" " कामरतिन्यासकथनंनाम चतुर्दशतमः पटलः ।

" " न्यासकथने त्रिपुरान्यासकथनन्नाम पञ्चदशतमः पटलः ।

" " न्यासकथनन्नाम षोडशतमः पटलः ।

" " " सप्तदशतमः पटलः ।

" " षोढान्यासकथनंनाम अष्टादशतमः पटलः ।

" नित्यार्चनकथनं नाम ऊनविंशतितमः पटलः ।

" उपचारकथनं नाम विंशतितमः पटलः ।

" मालाविधिकथनं नामैकविंशतितमः पटलः ।

" श्रीसिद्धिलक्ष्म्ययुताक्षरोद्धारणकथनं नाम द्वाविंशतितमः पटलः ।

" नित्यपूजाविधानेमृतकलाख्यं स्तोत्रं नाम त्रयोविंशतितमः पटलः ।

" विश्वमोहनकवचकथनं नाम चतुर्विंशतितमः पटलः ।

" श्रीसिद्धिलक्ष्म्याः सहस्रनामस्तोत्रकथनं नाम पंचविंशतितमः पटलः ।

समाप्तः ॥ ॥

## कालानलतन्त्रम्

क्रमाङ्क प्र. ४२ विषयाङ्कः ७८

ग्रन्थकारः ···· ····, नेपालीयं कागतम् , देवनागरी लिपिः , पङ्क्तयः ८ , आकारः १० ३/४ × ४ , ग्रन्थसंख्या ९००, पत्रसंख्या ५०, २२ पटलान्तं । खण्डितम् ।

## कालानलतन्त्रम्

क्रमाङ्कः प्र. ३१ विषयाङ्कः ७९

ग्रन्थकारः ···· ···· , नेपालीयं कागतम् , नेवारी लिपिः , पङ्क्तयः ७ , आकारः १० ३/८ × ३ ७/८ , ग्रन्थसंख्या ४८० । पत्रसंख्या २९ । अतिजीर्णम् ।

## कालानलतन्त्रम्

क्रमाङ्कः [illegible]. २२ विषयाङ्कः ८०

ग्रन्थकारः ···· ···· , नेपालीयं कागतम् , नेवारी लिपिः , पङ्क्तयः ७ , आकारः १२ ७/८ × ४ १/८ , ग्रन्थसंख्या , पत्रसंख्या ११६ ।

## कालिकाकुलक्रमसद्भावः

क्रमाङ्कः प्र. ७६ विषयाङ्कः ८१

ग्रन्थकारः ···· ····, नेपालीयं कागतम् , नेवारी लिपिः , पङ्क्तयः १२ , आकारः १२ १/४ × ३ ३/४ । ग्रन्थसंख्या ५०० । पत्रसंख्या १५ । अपूर्णम् ।

## कालिकाकुलपञ्चक्रमार्चनम्

क्रमाङ्कःप्र . १६६ विषयाङ्कः ८२

ग्रन्थकारः — विमलप्रबोधः, नेपालीयं कागतम् , नेवारी लिपिः, पङ्क्तयः ८, आकारः ९ १/२ × ४ १/८ , ग्रन्थसंख्या ४००, पत्रसंख्या २९ । आदिखण्डितम् ।

## कालिकाकुलपञ्चक्रमार्चनम्

क्रमाङ्कः प्र. १६६ विषयाङ्कः ८३

ग्रन्थकारः— विमलप्रबोधः , नेपालीयं कागतम् , देवनागरी लिपिः , पङ्क्तयः ७, आकारः ९ ३/४ × ३ १/८ । ग्रन्थसंख्या १८० । पत्रसंख्या ५ । आद्यन्तखण्डितम् ।

## कालिकाकुलपञ्चाशत्

विषयाङ्कः ८४

क्रमाङ्कः प्र. २५२

ग्रन्थकारः — श्रीनाथः, नेपालीयं कागतम् , नेवारी लिपिः , पङ्क्तयः ६, आकारः ८$\frac{3}{8}$×२$\frac{3}{8}$ , ग्रन्थसंख्या ६२५, पत्रसंख्या ५८ । समयः ७६५ । कालिदासेनसञ्चितं ।

आदिवाक्यम् ।

ॐ नमः श्रीमङ्गलायै ॥ यासान्तकाग्निकुहरोत्थितभास्वरूपा सोमार्कवन्हित्रिपथोदर मध्य-संस्था । चि चत्य चित्तविषयाक्षविलीनभावा सद्भावभावकिं(वि)कला प्रणमामि कालीम् । स्वकलान्तसुखाशक्तां कालान्तकलनीकलां । खकलां कमलारूढां नौमि श्रीकालिसंज्ञिताम् ।

पुष्पिकावाक्यानि ।

इति श्रीमदुत्तरपीठोद्धृते श्रीश्रीनाथावतारिते श्रीकालिकाकुले

पञ्चशते प्रथमः पटलः ।

" " " " द्वितीयः पटलः ।

" " " " तृतीयः पटलः ।

" " " " चतुर्थः पटलः ।

" " " " षष्ठःपटलः ।

" " " " सप्तमः पटलः ।

इति श्री ओ डियानपीठविनिर्गतं सर्वयोगिनीप्रणीतं मुखान्मुखविनिर्गतं महार्थक्रमज्ञानार्थं श्रीखचक्रपञ्चकेस्तोत्रं समाप्तम् ।

## कालिकाकुलसद्भावः

विषयाङ्कः ८५

क्रमाङ्कः प्र. ६८६,

ग्रन्थकारः ...., नेपालीयं कागतम्, नेवारी लिपिः, पङ्क्तयः ८, आकारः १५×४$\frac{1}{4}$, ग्रन्थसंख्या ९५०, पत्रसंख्या ३३, पूर्णः ।

## कालीकञ्चुकम्

विषयाङ्कः ८६

क्रमाङ्कः तृ २६८,

ग्रन्थकारः ...., नेपालीयं कागतम् , देवनागरी लिपिः, पङ्क्तयः ९, आकारः ७×३$\frac{1}{4}$, ग्रन्थसंख्या ११२, पत्रसंख्या २६, पूर्णम् ।

## कालीकवचम्

क्रमाङ्कः प्र. १६०. विषयाङ्कः ८७

ग्रन्थकारः ····, नेपालीयं कागतम्, नेवारी लिपिः, पङ्क्तयः १०, आकारः १५$\frac{2}{?}$×३$\frac{1}{2}$, ग्रन्थसंख्या २५, पत्रसंख्या १, पूर्णम् ।

## कालीकवचसंग्रहः

क्रमाङ्कः तृ २५१, विषयाङ्कः ८८

ग्रन्थकारः····, नेपालीयं कागतम्, देवनागरी लिपिः, पङ्क्तयः ९, आकारः १२$\frac{3}{4}$×५$\frac{1}{4}$, ग्रन्थसंख्या ९००, पत्रसंख्या ४६ ।

आदिवाक्यम् ।

श्रीगणेशाय नमः ॥ ॥ पार्वत्युवाच ॥ ॐ अस्या देव महादेव विद्यायामनुदीरितः ॥ द्वाविंशत्यक्षरी विद्या वहुधाभेदतः कथं ॥ १ ॥

पुष्पिकावाक्यानि ।

इति श्रीकुलार्णवोक्तमहाजगन्मंगलकवचं संपूर्णम् ।
इति श्रीकालीकल्पे कालीकवचं संपूर्णम् ।
इति श्रीकालीकुलामते कालीकवचं संपूर्णम् ।
इति श्रीकालिकाकुलसर्वस्वे विश्वमंगलनामकवचं संपूर्णम् ।
इति श्रीशांभवीसंहितायां दक्षिणाकवचं संपूर्णं ।
इति श्रीकालिकाकवचं संपूर्णम् ।
इति कालीकृत्ये दक्षिणकालिकाया आपदुद्धारणं कवचं समाप्तं ।
इति श्रीकालीकल्पे श्रीदक्षिणकालिकायाः भोगदं कवचं ।
इति वीरभद्रतंत्रे कालीकवचं समाप्तं ।
इति कुलसारे दक्षिणकालीकवचं संपूर्णम् ।
इति श्रीकालिकाकवचं तंत्रान्तरोक्तम् ।
इति कालीकल्पे वज्रपंजरनाम कवचं संपूर्णम् ।
इति श्रीकालीतंत्रे कालिकाकवचं संपूर्णम् ।
इति रुद्रयामले महातंत्रे कालिकाकवचं संपूर्णम् ।
इति श्रीकालीरहस्ये कालिकाकवचं जगद्रक्षाकरं संपूर्णम् ।

इति विश्वसारतंत्रे दक्षिणकालिकाकवचं संपूर्णम् ।

इति श्रीरुद्रयामले भैरवभैरवीसंवादे भगवत्याः कालिकायाः कामदं कवचं संपूर्णम् ।

इति श्रीविरूपाक्षविरचितं कालिकाकवचं संपूर्णम् ।

इति श्रीसुमेरोत्तरे शृंगस्थितकालभैरवनिर्मितं कालिकामंत्रकवचं संपूर्णम् ।

इति रुद्रयामलोक्तं कालभैरवविरचितं दक्षिणकाली-अभेद्यकवचं संपूर्णम् ।

इति अघोरयामले कालिकाकवचं संपूर्णम् ।

इति कालिकापुराणे त्रैलोक्यमोहनंनाम मंत्रकवचं संपूर्णम् ।

इति कुलाचारचंद्रोदये परमसिद्धागमे कालीरहस्ये कालीस्तव संपूर्णम् ।

इति श्रीमातंगीतंत्रे श्रीकालिकास्तवराजः संपूर्णः ।

इति घोरात्मकं यज्ञकालीकवचं संपूर्णम् ।

इति गौरीयामले कालिकायास्तवः संपूर्णम् ।

इति ब्रम्हगाथास्तुतिः ।

इति श्रीब्रम्हयामले दक्षिणकालीस्तवः संपूर्णम् ।

अन्तिमंवाक्यम् ।

स्मरेत्प्रथमपुष्पिणीं रुधिरबिंदुनीलावरां गृहीतमधुपात्रिकां मदविघूर्णनेत्रांचलां ॥ घन-स्तनभरानतां गलितनीविकां श्यामलां करस्फुरितवल्लरीविशदशंखताटंकिनीं ॥ ॥ इति ध्यात्वा ॥ इति कालीप्रस्तारे ईश्वरपार्वतीसंवादे पुष्पिणीस्तोत्रं संपूर्णम् ॥ ॥

## कालीकुलक्रमः

क्रमाङ्कः प्र. ६१ विषयाङ्कः ८६

ग्रन्थकारः .... .... , नेपालीयं कागतम् , नेवारी लिपिः , पङ्क्तयः १० , आकारः $१०\frac{१}{८}\times४\frac{५}{८}$ , ग्रन्थसंख्या ६०० , पत्रसंख्या २० , पूर्णः ।

## कालीकुलक्रमः

क्रमाङ्कः प्र. ११७ विषयाङ्कः ९०

ग्रन्थकारः .... .... , नेपालीयं कागतम् , नेवारी लिपिः , पङ्तयः ६ , आकारः $११\frac{१}{२}\times२\frac{७}{८}$ , ग्रन्थसंख्या ६०० पत्रसंख्या ३४ ।

इति श्रीभैरव श्रोतसि शिरच्छेदे महाकरवीरयोगे परातन्त्रे कालीकुलक्रम : समाप्तः ॥ शुभम ॥ ॥

समयः — नेपालाब्दे वेदसिन्ध्वद्रियाते सप्तम्यां वै फाल्गुणे मासि कृष्णे , स्वेष्टप्रीत्यै श्रीपरातन्त्रमार्या संपूर्णं तल्लेखितं स्वात्महेतोः ।

## कालीकुलक्रमः

क्रमाङ्कः प्र. १६३७ विषयाङ्कः ६१

ग्रन्थकारः ……… , नेपालीयं कागतम् , देवनागरी लिपिः , पङ्क्तयः ६ , आकारः ९$\frac{3}{4}$×२$\frac{1}{4}$ , ग्रन्थसंख्या २५६ , पत्रसंख्या १६ , आदिखण्डितः ।

## कालीकुलक्रमार्चनम्

क्रमाङ्कः तृ. ३१४ विषयाङ्कः ६२

ग्रन्थकारः विमलप्रबोधपादः , नेपालीयंकागतम् , नेवारीलिपिः , पङ्क्तयः ५ , आकारः ९$\frac{1}{2}$×२$\frac{5}{6}$ , ग्रन्थसंख्या ७०० , पत्रसंख्या ६७ । पूर्णम् ।

आदिवाक्यम् ।

ॐ परमशिवशक्ति श्रीश्रीनाथ अशेषपारंपर्यक्रमस्वगुरुपादांबुजं यावत्प्रणौमि ।। या चन्द्रे भूतभिन्ना रविहविसदने गोत्रचन्द्रैश्च रुद्रैर्हृन्नाभौ कन्दचक्रे त्रिदहनकुहरे द्वादशैकेनसंस्था। सृष्टिस्थैर्यान्तकर्त्री त्रिकलखखयुता सर्वतः स्वैकवृत्तिं तां कालीं नौमि नित्यं परमपदमयीं सत्सदानन्ददात्रीं । विश्वामित्रं वशिष्ठञ्च श्रीकण्ठं कुण्डलीश्वरम् । श्रीक्रोधं मीनतालांकौ वन्दे श्रीधर्मदेशकान् । प्रणम्य अलकाचार्यपादपद्मं सुभक्तितः । श्रीविमलप्रबोधोहमेकदण्डी शिवात्मकः ।। ।।

अन्तिमवाक्यम् —

परमहंसपरिव्राजकाचार्यश्रीविमलप्रबोधपादविरचितं कालीकुलक्रमार्चनं समाप्तम् ।। ।। नेपालहायने याते व्योमवन्हिमुनौ ७३० तथा । वैशाखेऽसितदुर्गायां पूर्णं तल्लिखितं मया ।। ।।

## कालीकुलार्णवः

क्रमाङ्कः द्वि. १३०, विषयाङ्कः ६३

ग्रन्थकारः …, नेपालीयं कागतम् , नेवारी लिपिः , पङ्क्तयः ७, आकारः १०$\frac{1}{4}$×६$\frac{3}{4}$, ग्रन्थसंख्या १०८०, पत्रसंख्या ५६, पूर्णः ।

आदिवाक्यम् ।

ॐनमः गणाधिपायः ।। श्रीवीरनाथोवाच । कैलाशसिखरासीनं देवं त्रिभुवनेश्वरं । प्रणम्य

शिरसा देवी पृच्छते कालिका हरं । ॐगुह्यकालिकायै ॥ तथातो अथर्वणसंहितायां । श्रीदेव्याह ॥ ॐमर्माभिघातनी नमोनमः ॥ सामरस्यस्थिता देवा द्वैताद्वैतविवर्जितः(म) । पृच्छते कालिका देवी भैरवं भुवनेश्वरम् । प्रलयानलसंकाशं जगद्रक्षणतत्परं । देवाधिदेवतं भीष्मं द्वैताद्वैतस्य स्थापनम् । येन तेषां प्रतृप्यन्ते तेषान्तत्र महत्फलम् । तत्र तेषां महा धर्मा अद्वैतं नित्यभावनः । द्वैतं विकल्पकं चैव अद्वैतं कथयस्व मे । इति पृच्छ तया देवा कालिकां दक्षिणाव्हयं । गुह्यकाल्या क्रमं पुण्यं षडाम्नायप्रपूजितम् ॥ श्रीभैरवउवाच ॥ शृणु देवी महागुह्यं प्रलयानिलसंनिभं । कथयामि समासेन गोपनीयं प्रयत्नतः । इति श्रीकालिकुलार्णवे त्रयोदश सटीका ।

" महातन्त्रे महारावे महागुह्यकाल्या निर्वाणत्रयोदश सटीकाया द्वादशसहस्रोद्धृता समाप्ता ।

इति श्रोकालीकुलार्णव संपूर्णम् ।

शुभ संवत् ८६७ पौखशुदि ७ सोमदिने सम्पूर्णः ।

## कालीतत्त्वम्

क्रमाङ्कः प्र. १५३१, विषयाङ्कः ६४

ग्रन्थकारः राघवभट्टः, नेपालीयं कागतम्, मैथिली लिपिः, पङ्क्तयः ११, आकारः ११×४, ग्रन्थसंख्या १६००, पत्रसंख्या ५३, खण्डितमपूर्णम् ।

## कालीतत्त्वम्

क्रमाङ्कः प्र. १६६ विषयाङ्कः ६५

ग्रन्थकारः — राघवभट्टः, नेपालीयं कागतम्, नेवारी देवनागरी च लिपिः, पङ्क्तयः ६–८ आकारः १६$\frac{?}{?}$×३$\frac{?}{?}$, ग्रन्थसंख्या ४००, पत्रसंख्या ६० ।

आदिवाक्यम् ।

ॐ नमः श्रीगणेशाय नमः ॥ उन्मीलन्नवनीरजालिविगलन्माध्वीकलुब्धांतरभ्राम्यन्मांसलमत्तषट्पदछटा व्यस्ताः समस्ता इव । शंभोराननपङ्कजेषु पुरित प्रागुत्पतंत्यस्यरा निःशेषं मम दुःकृतानि गिरिजे हंन्युः कटाक्षोर्मयः । विचार्य सर्वतंत्राणि कुलनाथगणैः सह । साधकानां च पंथानं गुरूणां च तथात्मनाम् । उपनिषत्तथास्तोत्रं निवद्धानपि भूयशः ॥ श्रीमद्राघवभट्टेन कालीतत्वं वितन्यते ।

पुष्पिकावाक्यानि ।–

इति राघवभट्टेन कृ॰ कालीतत्त्वे प्रातःकृत्यनाम तत्वम् ।

,, ,, स्नानप्रतिपादनं नाम द्वितीयं तत्वम् ।

,, ,, सन्ध्याप्रतिपादनं नाम तृतीयं तत्वम् ।

,, ,, तर्पणं नाम चतुर्थं तत्वम् ।

,, ,, ,, पञ्चमतत्वम् ।

,, ,, द्रव्यशुद्धिप्रतिपादनं नाम षष्ठः तत्वम् ।

,, ,, सप्तमं तत्वम् ।

,, ,, अष्टमं तत्वम् ।

,, ,, नवमं तत्वम् ।

,, ,, दशमं तत्वम् ।

,, ,, एकादशतत्वम् ।

,, ,, द्वादशतत्वम् ।

,, ,, त्रयोदशतत्वम् ।

,, ,, चतुर्दशतत्वम् ।

,, ,, पञ्चदशतत्वम् ।

,, ,, षोडशतत्वम् ।

,, ,, सप्तदशतत्वम् ।

,, अष्टादशतत्वम् ।

,, ,, एकोनविंशतितमतत्वम् ।

,, ,, विंशतितमतत्वम् ।

इति श्रीभट्टराघवविरचिते कालीतत्वे रहस्यप्रतिपादनं नामैकविंशतितमतत्वम् । संवत् १७१६ वर्षे शाके १५८५ वैशाखमासे शुक्लपक्षे ११ रोज ५ । इतिसंवत् १९५४ साल मिति पौषवदि १० रोज १ तद्दिने जीर्णोद्धारं समाप्तम् ।

## कालीतत्त्वम्

क्रमाङ्कः प्र. १३६६ विषयाङ्कः ६६

ग्रन्थकारः राघवभट्टः, नेपालीयंकागतम्, नेवारीलिपिः, पङ्क्तयः १०, आकारः १०१/२×३१/२, ग्रन्थसंख्या १००। पत्रसंख्या ५।

## कालीतत्त्वम्

क्रमाङ्कः प्र. १४०६ विषयाङ्कः ९७

ग्रन्थकारः राघवभट्टः, नेपालीयं कागतम् , नेवारी लिपिः, पङ्क्तयः ७, आकारः ८$\frac{?}{?}$×३, ग्रन्थसंख्या १५०, पत्रसंख्या १६, कुण्डगोलोत्पत्तिप्रतिपादनान्तम् ।

## कालीतत्त्वम्

क्रमाङ्कः तृ. १६५ विषयाङ्कः ९८

ग्रन्थकारः राघवभट्टः, नेपालीयं कागतम् , नेवारीलिपिः , पङ्क्तयः ७ , आकारः १२-×३$\frac{३}{४}$ , ग्रन्थसंख्या १५००, पत्रसंख्या ८५, ८ तत्वाद १७ तत्वान्तम् । ने. सं. ७५३ ।

## कालीतत्त्वे आचारप्रदीपः

क्रमाङ्कः प्र. १५१६ विषयाङ्कः ९९

ग्रन्थकारः राघवभट्टः, नेपालीयं कागतम् ,नेवारी लिपिः, पङ्क्तयः ७, आकारः९×३$\frac{१}{८}$, ग्रन्थसंख्या १३०, पत्रसंख्या १३, आदिखण्डितः ।

## कालीतत्त्वे प्रायश्चित्तविधिः

क्रमाङ्कः प्र. १५३६ विषयाङ्कः १००

ग्रन्थकारः राघवभट्टः, नेपालीयं कागतम् , नेवारी लिपिः, पङ्क्तयः ७, आकारः ८$\frac{?}{?}$×३$\frac{१}{२}$ , ग्रन्थसंख्या ४५ । पत्रसंख्या ५ ।

## कालीतन्त्रम्

क्रमाङ्कः प्र. १४५ विषयाङ्कः १०१

ग्रन्थकारः ..., नेपालीयं कागतम् , नेवारी लिपिः, पङ्क्तयः ७ , आकारः ११$\frac{?}{?}$×३, ग्रन्थसंख्या २००, पत्रसंख्या १७ , १२ पटलान्तम् ।

आदिवाक्यम् ।

ॐश्रीमहाचण्डिकायैनमः ॥ श्रीग्रहगणाधिपतयेनमः ॥ कैलासशिखरारूढं देवदेवं जगदद्गुरुम् । उवाच पार्वती देवी भैरवं परमेश्वरम् ॥ १ ॥

समाप्तिः ।

तस्मात्सर्वप्रयत्नेन गोप्तव्यं देवतागणैः । यथोर्थान् लभते कामान् तथा कार्यं महेश्वरि ॥ योऽव्यक्तसाधको ज्ञानी तस्मै सत्यं प्रकाशयेत् ॥ कालीप्रीतिरस्तु ॥ शुभमस्तु ॥

पुष्पिकावाक्यानि ।

इति कालीतन्त्रे सपर्यानियमः प्रथमः पटलः ॥ १ ॥

,, पुरश्चरणपटलः ॥ २ ॥

,, नैमित्तिकविधिस्तृतीयः पटलः ॥ ३ ॥

,, कामनाविधिश्चतुर्थः पटलः ॥ ४ ॥

इति पञ्चमपटलः ॥ ५ ॥

इति कालीतन्त्रे साधनपटलः ॥ ६ ॥

,, पुरश्चरणरहस्यंनाम सप्तमः पटलः ॥ ७ ॥

,, आधाननियम अष्टमः पटलः ॥ ८ ॥

,, माहात्म्यप्रकाशकोनाम दशमः पटलः ॥ १० ॥

,, सिद्धिविद्याकथनमेकादशः पटलः ॥ ११ ॥

,, द्वादशः पटलः ॥ १२ ॥

## कालीतन्त्रम्

क्रमाङ्कः तृ. १६५ विषयाङ्कः १०२

ग्रन्थकारः ····, नेपालीयं कागतम् , नेवारी लिपिः, पङ्क्तयः ८, आकारः ११×३$\frac{3}{4}$ ग्रन्थसंख्या ३०० । पत्रसंख्या १२ । १५ पटलान्तम् पूर्णम् ।

## कालीतन्त्रम्

क्रमाङ्कः तृ. १६५, विषयाङ्कः १०३

ग्रन्थकारः····, नेपालीयं कागतम् , नेवारी लिपिः, पङ्क्तयः १०, आकारः १७$\frac{1}{4}$×३$\frac{5}{8}$, ग्रन्थसंख्या २००, पत्रसंख्या ७, ने. सं. ७७४, कालीकलाख्य ११ तमपटलान्तं पूर्णम् ।

## कालीतन्त्रम्

क्रमाङ्कः तृ २५१ विषयाङ्कः १०४

ग्रन्थकारः ····, नेपालीयं कागतम् , देवनागरी लिपिः, पङ्क्तयः ९, आकारः १३$\frac{3}{4}$×४$\frac{1}{4}$, ग्रन्थसंख्या १७०, पत्रसंख्या १७, १२ पटलान्तम् ।

## कालीतन्त्रम्

क्रमाङ्कः प्र. १६३७, विषयाङ्कः १०५

ग्रन्थकारः ····, नेपालीयं कागतम् , नेवारीलिपिः, पङ्क्तयः ५, आकारः ९$\frac{5}{8}$×२$\frac{1}{4}$,

ग्रन्थसंख्या ७०, पत्रसंख्या ७, आदिमध्यान्तखण्डितम् ।

## कालीतन्त्रम्

क्रमाङ्कः प्र. २२०, विषयाङ्कः १०६

ग्रन्थकारः ····, नेपालीयं कागतम्, नेवारी लिपिः, पङ्क्तयः १०, आकारः ८$\frac{3}{8}$×३$\frac{5}{8}$, ग्रन्थसंख्या २००, पत्रसंख्या १०, आद्यन्तखण्डितम् , १० पटलान्तम् ।

## कालीतन्त्रम्

क्रमाङ्कः तृ. १५०, विषयाङ्कः १०७

ग्रन्थकारः ····, नेपालीयं कागतम्, देवनागरी लिपिः, पङ्क्तयः १०, आकारः ११$\frac{3}{4}$×५$\frac{1}{2}$, ग्रन्थसंख्या ३००, पत्रसंख्या १७, आद्यन्तखण्डितम् ।

## कालीमन्त्रमहार्णवः

क्रमाङ्कः प्र. २१२, विषयाङ्कः १०८

ग्रन्थकारः ····, नेपालीयं कागतम्, नेवारी लिपिः, पङ्क्तयः ७, आकारः १०$\frac{1}{4}$×२$\frac{3}{4}$, ग्रन्थसंख्या ४००, पत्रसंख्या ३२, अपूर्णः ।

## कालोत्तरतन्त्रम्

( अध्युषशतिकद्विशतिकभागात्मकम् )

क्रमाङ्कः प्र. १६३४, विषयाङ्कः १०९

ग्रन्थकारः ····, ताडपत्राणि, प्राचीनदेवनागरी लिपिः, पङ्क्तयः ५, आकारः १२$\frac{1}{4}$×२$\frac{1}{4}$, ग्रन्थसंख्या २२५, पत्रसंख्या ४० ।

आदिवाक्यम् ।

ॐ नमः शिवाय ॥ कार्तिकेयउवाच ॥ भगवन्देवदेवेश लोकनाथ जगत्पते ॥ मंत्रतंत्र त्वयाप्रोक्तं विस्तरं व···· साधनम् ॥ अल्पायुषां त्विमे मत्या अल्पवीर्यपराक्रमा । अल्पसत्वाल्पवित्ताश्च लोभमोहसमन्विताः ॥ अल्पग्रन्थं महार्थञ्च पदार्थानेकसंकुलम् । वक्तुमर्हसि देवेश अनुग्रहार्थं प्रभो मम ॥ ईश्वर उवाच ॥ अतः परं प्रवक्ष्यामि शास्त्रं परमदुर्लभम् । नाम्नातु वाथुलितन्त्रं कालाख्यमितिसंज्ञकम् ।

पुष्पिकावाक्यानि ।

इति कालोत्तरे अध्युषतिक(:)प्रथमः पटलः ।

" " द्वितीयः पटलः ।

" " तृतीयः पटलः ।

" " चतुर्थः पटलः ।

" " पञ्चमः पटलः ।

" " षष्ठः पटलः ।

" " सप्तमः पटलः ।

" " अष्टमः पटलः ।

" " नवमः पटलः ।

" " दशमः पटलः ।

" " एकादशः पटलः ।

" " द्वादशः पटलः ।

" " त्रयोदशः पटलः ।

" " चतुर्दशः पटलः ।

" " पञ्चदशः पटलः ।

" " षोडशः पटलः ।

" " सप्तदशः पटलः ।

" " अष्टादशः पटलः ।

" " एकोनविंशतितमः पटलः ।

" " विंशतितमः पटलः ।

" " एकविंशतितमः पटलः ।

" " द्वाविंशतितमः पटलः ।

" " त्रयोविंशतितमः पटलः ।

" " चतुर्विंशतितमः पटलः ।

" " पञ्चविंशतितमः पटलः ।

" " षड्विंशतितमः पटलः ।

" " सप्तविंशतितमः पटलः ।

अन्त्यवाक्यम् ।

अस्त्रदीक्षा समाप्येवं सर्वच्छिद्रनिकृंतनीम् ।

थ थ थ थ थ थ थ थ थ थ थ थ थ थ थ थ। अतः परं खण्डितम् ।

द्विशतिके आदिवाक्यम् ।

ज्ञानादेव तु मुच्यन्ते साधका जन्मबन्धनात् । अप्रकाश्यमिदं मिष्टं गोपनीयं प्रयत्नतः ।

पुष्पिकावाक्यानि ।

इति कालोत्तरे द्विशतिके दशमः पटलः ।
" " एकादशः पटलः ।
" " द्वादशः पटलः ।
" " त्रयोदशः पटलः ।
" " चतुर्दशः पटलः ।
" " पञ्चदशः पटलः ।
" " षोडशः पटलः ।
" " सप्तदशः पटलः ।

इति कालोत्तरे द्विशतिके अष्टादशः पटलः ।

शुभं भवतु ।

## कालोत्तरतन्त्रम्

क्रमाङ्कः प्र. २७३, विषयाङ्कः ११०

ग्रन्थकारः....., ताडपत्राणि, प्राचीनदेवनागरी लिपिः, पङ्क्तयः ५, आकारः १२½×२⅛, ग्रन्थसंख्या ५०००, पत्रसंख्या १९५, आदिखण्डितम् ।

आरम्भवाक्यम् ।

प्रायश्चित्तसमाप्तौ तु देशिको.....प्राय क्रमाशनु हेमवस्त्रयानाद्यै यथशक्त्या तथा तोषयेत् ।
प्रायश्चित्त यदाकश्चिकर्तुं नो शक्यते कचित् ।

पुष्पिकावाक्यानि ।

इति कालोत्तरमहातन्त्रे प्रायश्चित्तपटलः ।
" " अक्षसूत्रमालापटलः ।
" " त्रिघण्टालक्षण पटलः ।

„ „ अष्टपुष्पिकापटलम् ।

„ „ व्रतयोत्रापटलम् ।

„ „ फाल्गुनकृष्णचतुर्दशीव्रतपटलम् ।

„ „ ग्रहव्रतानि(दि)पटलम् ।

„ „ व्रतपटलम् ।

„ „ तत्त्वोक्तिपटलम् ।

„ „ साधनासंवित्तिपटलम् ।

„ „ नाडीचक्रोद्देशपटलम् ।

„ „ कालाज्ञानपटलम् ।

„ „ कालाधिकरण पटलम् ।

„ „ प्रसाद् प्रणवव्याप्तिपटलम् ।

„ „ प्रत्यक्षयजनपटलम् ।

„ „ लिङ्गोद्धारपटलम् ।

„ „ उत्क्रान्त्याअन्तेष्टिपटलम् ।

„ „ अन्तर्यागपटलम् ।

„ „ कमण्डलुपटलम् ।

„ „ अंते(त्ये)ष्टिमृतोद्धारपटलम् ।

„ „ श्राद्धपटलम् ।

„ „ लिङ्गवर्णनापटलम् ।

„ „ लिङ्गपटलम् ।

„ „ प्रतिमापटलम् ।

„ „ मातृभैरवचर्चना(वर्णना ?)पटलम् ।

„ „ पीठपटलम् ।

„ „ वास्तुयागपटलम् ।

„ „ प्रासादलक्षणपटलम् ।

„ „ अधिवासनपटलम् ।

„ „ „ „

„ „ स्थापनपटलम् ।

,, जीर्णोद्धारपटलम् ।

,, ,, वृषभपटलम् ।

,, ,, योगपटलम् ।

,, ,, उद्घाटोद्देशपटलम् ।

,, ,, जपपटलम् ।

,, ,, ब्रह्माण्डवर्णनन्नामपटलम् ।

,, ,, तत्वयुक्तिवर्णनपटलम् ।

,, ,, मन्त्रार्थ्थपटलम् ।

,, ,, क्षेत्रग्रहणपटलम् ।

,, ,, शक्तिवर्णनपटलम् ।

,, ,, पूर्वसेवापटलम् ।

,, ,, साधनपटलम् ।

इति कालोत्तरतन्त्रे अघोरादिशास्त्रव्युष्टिपरिपालनापटलम् ।

समाप्तश्चेदं बृहत्कालोत्तर नाम शिवसिद्धान्तम् ॥ ८५८ इति शुभम् ।

## कालोत्तरतन्त्रम्

क्रमाङ्कः च. विषयाङ्कः १११

ग्रन्थकारः ···· , ताडपत्राणि, प्राचीनदेवनागरी नेवारी च लिपिः, पङ्क्तयः ५ । आकारः ११×२, ग्रन्थसंख्या···· पत्रसंख्या३२०, सचित्रकाष्ठगात्रोपेतम् । मध्यखण्डितम् । प्रान्तो मूषिकदष्टम् ।

आदिवाक्यम् ।

ॐनमः शिवाय ॥ कार्तिकेय उवाच ॥ सर्वज्ञाय नमस्तुभ्यं सर्वकर्त्रि नमोस्तुते । अविलुप्त-स्वरूपाय चिन्मात्राय नमोस्तुते । प्रमाणातीतदेहाय नमः शान्ताय तेजसे ।

पुष्पिकावाक्यानि ।

इति कालोत्तरे महातन्त्रे प्रथमः पटलः ।

,, ,, ,, प्र (प्रा) सादोद्धारपटलम् ।

,, ,, निष्फलमन्त्रपटलम् ।

,, ,, कलाढ्यमन्त्रपटलम् ।

,, ,, खमलंकृतपटलम् ।

" " क्षपणाख्यमन्त्रोद्धारपटलम्
" महातन्त्रे क्षयमन्त्रसंज्ञके व्योमव्यापिनि
" " कण्ठोष्ठ्यमन्त्रोद्धारपटलम् ।
" " सन्ध्यापटलम् ।
" " विधिस्नानपटलम् ।
" " भस्मस्नानविधिपटलम् ।
" अर्चनविधिपटलम् ।
" " नित्यान्हिकपटलम् ।
" " दीक्षाधिवासपटलम् ।
" " महातन्त्रे सामान्यसर्वार्थपटलम् ।
" " दीक्षापटलम् ।
" " चण्डयागपटलम् ।
" " महातन्त्रे समयीपुत्रकसाधकाभिषेकपटलम् ।
" " " तन्त्रोत्पत्तिव्याख्यापटलम् ।
" " " शिवतनुवर्णनपटलम् ।
" " " व्याख्यापटलम् ।
" " " गणपतिपूजापटलम् ।
" " " वागीश्वरीपूजापटलम् ।
" " " मण्डलपटलम् ।
" " " अस्त्रवर्णनपटलम् ।
" " " ग्रहयामपटलम् ।
" " " अस्त्रपटलम् ।
" " " पाशुपतास्त्रपटलम् ।
" " " महास्त्रकथनपटलम् ।
" " " शिवशान्तिपटलम् ।
" " " अघोरकल्पशान्तिपटलम् ।
" " " रुद्रशान्तिपटलम् ।

" " " आश्रमपटलम् ।

" " " गोचरपटलम् ।

" " " समयाचारपटलम् ।

" " " गुरुविरा(चा)रपटलम् ।

इति कालन्तरे महातन्त्रे अंशककाल(क्ष)णपलम् ।

" " " गौरीयागपटलम् ।

" " " मृत्युँजयपटलम् ।

" " " व्रतेश्वरपटलम् ।

" " " गुरुयागपटलम् ।

" " " अनध्ययनपटलम् ।

" " " पवित्रारोहणपटलम् ।

" " " " "

" " " प्रायश्चित्तपटलम् ।

" " " " "

" " " अक्षसूत्रमालापटलम् ।

" " " घण्टापटलम् ।

" " " पुष्पपटलम् ।

" " " अष्टपुष्पिकापटलम् ।

" " " व्रतयात्रापटलम् ।

" " " फाल्गुनकृष्णचतुर्दशीव्रतपटलम् ।

" " " ग्रहव्रतानि(दि)पटलम् ।

" " " व्रतपटलम् ।

" " " तत्त्वोत्पत्तिपटलम् ।

" " " नाडीचक्रोद्देशपटलम् ।

" " " कालज्ञानपटम् ।

" " " कालाधिकरणपटलम् ।

" " " प्रसादप्रणवव्यासपटलम

" " " प्रत्यक्षयजनपटलम् ।

" " " लिङ्गोद्धारपटलम् ।

" " " उत्क्रान्त्यअन्ने(न्त्ये)ष्टिपटलम् ।

" " " अन्तर्यागपटलम् ।

" " " कमण्डलुपटलम् ।

" " " अंते(न्त्ये)ष्टिमृतोद्धारपटलम् ।

" " " श्राद्धपटलम् ।

" " " लिङ्गवर्णनापटलम् ।

" " " लिङ्गपटलम् ।

" " " प्रतिमापटलम् ।

इति कालोत्तरे महातन्त्रे मातृभैरवचर्चना(वर्णना) पटलम् ।

" " " पीठपटलम् ।

" " " बास्तुयागपटलम् ।

" " " प्रासादलक्षणपटलम् ।

" " " अधिवासपटलम् ।

" " " " "

" " " स्थापनपटलम् ।

" " " जीर्णोद्धारपटलम् ।

" " " वृषभपटलम् ।

" " " योगपटलम् ।

" " " उद्धातोद्देशपटलम् ।

" " " जपपटलम् ।

" " " ब्रम्हाण्डवर्णनं नाम पटलम् ।

" " " तत्वयुक्तिवर्णनापटलम् ।

" " " मन्त्रार्था(पटलम्) ।

" " " क्षेत्रग्रहणपटलम् ।

" " " शक्तिवर्णनपटलम् ।

" " " पूर्वसेबापटलम्

" " " साधनपटलम् ।

इति कालोत्तरे महातन्त्रे अघोरादिशास्त्रव्युष्टिपरिपालनापटलम् ॥ इतिशुभम् ॥समाप्तञ्चेदं बृहत्कालोतरं नाम शिवसिद्धान्तम् ॥

सम्वत्सर २८९ ज्यैष्ठशुक्लदशम्यां बुधदिने राजाऽधिराजपरमेश्वरश्रीरुद्रदेवराज्ये श्री यंगलदक्षिणटोलकेऽधिवासिना भट्टश्रीसै(शै)वाचार्य अमृतमित्रेण वाराणस्यां लिख्यो (खा) पिता श्रेयः ॥

## कालोत्तरतन्त्रम्

विषयाङ्कः ११२

क्रमाङ्कः प्र ८६

ग्रन्थकारः—, ताडपत्राणि, नेवारी लिपिः, पङ्क्तयः ५, आकारः १४×२ ग्रन्थसंख्या ६२००, पत्रसंख्या २६१, अपूर्णम् खण्डितञ्च ।

## कालोत्तरतन्त्रम्

विषयाङ्कः ११३

क्रमाङ्कः प्र ५२

ग्रन्थकारः—, नेपालीयं कागतम्, देवनागरी लिपिः, पङ्क्तयः ६, आकारः ८$\frac{१}{२}$×४$\frac{१}{२}$, ग्रन्थसंख्या ५००, पत्रसंख्या ६९, कुण्डलक्षणपटलान्तमपूर्णम् ।

## कालोत्तरतन्त्रम्

विषयाङ्कः ११४

क्रमाङ्कः प्र १८२

ग्रन्थकारः–, नेपालीयं कागतम् , नेवारी लिपिः, पङ्क्तयः ९, १०, आकारः १३$\frac{३}{४}$×४$\frac{१}{४}$, ग्रन्थसंख्या २००, पत्रसंख्या १०, वृतेश्वरपटलान्तम् ।

## कालोत्तरतन्त्रम्

( सप्तशतिकम )

विषयाङ्कः ११५

क्रमाङ्कः तृ. १२

ग्रन्थकारः—, नेपालीयं कागतम्, देवनागरी लिपिः, पङ्क्तयः ७, आकारः १२$\frac{१}{२}$×३$\frac{३}{४}$, ग्रन्थसंख्या ५८०, पत्रसंख्या ३२, ३२ पटलान्तम् ।

## कालोत्तरतन्त्रम्

विषयाङ्कः ११६

क्रमाङ्कः तृ १२

ग्रन्थकारः—, नेपालीयं कागतम्, देवनागरी लिपिः, पङ्क्तयः ७, आकारः १२$\frac{१}{२}$×३$\frac{३}{४}$, ग्रन्थसंख्या १२००, पत्रसंख्या ६८, १० पटलान्तम् ।

## कालोत्तरतन्त्रम्

क्रमाङ्कः द्वि. २२६ विषयाङ्कः ११७

ग्रन्थकारः—, ताडपत्राणि, प्राचीनदेवनागरी लिपिः, पङ्क्तयः ५, आकारः १२ १/८ × ३ १/२, ग्रन्थसंख्या ५००, पत्रसंख्या ३७, आदिपत्रखण्डितम् ।

## कालोत्तरतन्त्रम्

क्रमाङ्कः प्र. १५८३ विषयाङ्कः ११८

ग्रन्थकारः, —, ताडपत्राणि, नेवारी लिपिः, पङ्क्तयः ५, आकारः १२ १/८ × १/२, ग्रन्थसंख्या ४००, पत्रसंख्या २६, मध्यखण्डितम् ।

## किञ्चित्तन्त्रम्

( गुह्यकालीविषयकम् )

क्रमाङ्कः तृ. १६५ विषयाङ्कः ११९

ग्रन्थकारः—, नेपालीयं कागतम् , नेवारी लिपिः, पङ्क्तयः ७, आकारः १० १/८ × ३ २/६ ग्रन्थसंख्या ५००, पत्रसंख्या ३७, आद्यन्तखण्डितम् ।

## किरणाख्यतन्त्रम्

क्रमाङ्कः च विषयाङ्कः १२०

ग्रन्थकारः—, नेपालीयं कागतम्, नेवारी लिपिः, पङ्क्तयः ७ , आकारः ११ १/२ × ३ ७/१० , ग्रन्थसंख्या १५८२, पत्रसंख्या ८३ ।

आदिवाक्यम् ।

ॐनमःशिवाय ॥ कैलासशिखरारूढं सोमं सोमार्द्धशेखरम् । हरं दृष्ट्वाब्रवीत्ताक्ष्यःस्तुतिपूर्वमिदंवचः । जयान्धक वृषस्कन्ध बन्धभेदविचक्षण । जय प्रवीर वीरेश जय त्रिपुरदाहक । जयाखिलसुरेशान शिरश्छेदभयानक । जय प्रथितसामर्थ्य मन्मथस्थितिनाशन । जय प्रलयकालाग्निकालकूटबलापह । जयावर्त्तमहाटोपसरिद्वेगविधारकः । जय दारुवनोद्यानमुनिपत्नाविमाहकः । जय नृत्यमहारम्भक्रीडाविक्षोभदारुणः । जयोग्ररूपसं···त्रासितत्रिदशासुर । जय क्रूरजनेन्द्रस्य दशितासृकसुनिर्भर । जय वीरपरिस्कन्द दक्षयज्ञनिसूदकः । जयोद्भूतमहालिङ्गसंस्थानबलगर्वितः । जय स्वेदनिर्मितोग्रमृत्युदेहानसूदक । जयाशेषसुखावास काममोहितशैलज । जयोपमन्युसंत्तापमोहजालतमोहर ।

पुष्पिकावाक्यानि ।

इति किरणाख्ये महातन्त्रे प्रथमः पटलः ।
" " द्वितीयः पटलः ।
" " तृतीयः पटलः ।
" " चतुर्थः पटलः ।
" " पञ्चमः पटलः ।
" " षष्ठः पटलः ।
" " सप्तमः पटलः ।
" " अष्टमः पटलः ।
" " नवमः पटलः ।
" " दशमः पटलः ।
" " एकादशः पटलः ।
" " द्वादशः पटलः ।
" " त्रयोदशःपटलः ।
" " चतुर्दशः पटलः ।
" " पञ्चदशः पटलः ।
" " षोडशः पटल ।
" " सप्तदशः पटलः ।
" " अष्टादशः पटलः ।
" " एकोनविंशः पटलः ।
" " विंशतितमः पटलः ।
" " एकविंशतितमः पटलः ।
" " द्वाविंशतितमः पटलः ।
" " त्रयोविंशतितमः पटलः
" " चतुर्विंशतितमःपटलः ।
" " पञ्चविंशतितमः पटलः ।
" " षड्विंशतितमः पटलः ।
" " सप्तविंशतितमः पटलः ।

" " अष्टाविंशतितमः पटलः ।

" " एकोनत्रिंशः पटलः ।

" " त्रिंशतितमः पटलः ।

" " एकत्रिंशतितमः पटलः ।

" " द्वात्रिंशतितमः पटलः ।

" " त्रयस्त्रिंशतितमः पटल ।

" " चतुस्त्रिंशतितमः पटल ।

" " पञ्चत्रिंशतितमः पटलः ।

" " षट्त्रिंशतितमः पटलः ।

" " सप्तत्रिंशतितमः पटलः ।

" " अष्टत्रिंशतितमः पटलः ।

" " एकोनपञ्चाशत्तमः पटलः ।

" " पञ्चाशत्तमः पटलः ।

" " एकपञ्चाशत्तमः पटल ।

" " द्वापञ्चाशत्तमः पटल ।

" " त्रिपञ्चाशत्तमः पटलः ।

" " चतुः पञ्चाशत्तमः पटलः ।

" " पञ्चपञ्चाशत्तमः पटलः ।

" " षट्पञ्चाशत्तमः पटलः ।

" " सप्तपञ्चाशत्तमः पटलः ।

सम्वत् ८१९ कार्तिक शुक्ल २२ शनिश्चर थ्वकुनु सम्पूर्ण शुभः । अत्र पत्रसंख्यानां तथा ग्रन्थसन्दर्भाणां च पर्यालोचने क्रियमाणे ग्रन्थः संलग्न इव प्रतिभाति परञ्च पुष्पिकायां पर्यालोच्यमानायाम् एकोनचत्वारिंशपटलमारभ्य अष्टचत्वरिंशपटलपर्यन्तं त्रुटित इति प्रतिभाति ।

## किरणाख्यतन्त्रम्

क्रमाङ्कः च विषयाङ्कः १२१

ग्रन्थकारः····, नेपालीयं कागतम्, देवनागरी लिपिः, पङ्क्तयः ७, आकारः ११½×४⅚,

ग्रन्थसंख्या ५३००, पत्रसंख्या ८३, खण्डितम् ।

## कुब्जिकाध्यानादि

क्रमाङ्कः प्र. ७६ विषयाङ्कः १२२

ग्रन्थकारः ····, नेपालीयं कागतम्, नेवारी लिपिः, पङ्क्तयः ९, आकारः ११$\frac{1}{4}$×४$\frac{3}{4}$, ग्रन्थसंख्या ६०, पत्रसंख्या २, अपूर्णम् ।

## कुब्जिकानित्याह्निकतिलकम्

क्रमाङ्कः प्र२३६ विषयाङ्क :१२३

ग्रन्थकारः····, नेपालीयं कागतम्, नेवारी लिपिः, पङ्क्तयः, ७, आकारः ८$\frac{3}{4}$×३$\frac{1}{2}$, ग्रन्थसंख्या ७००, पत्रसंख्या ८५ पूर्णम्,

आदिवाक्यम्,

ॐनमो महारवाय ।। ॐ श्रीहेरम्वाय नमः ।। शशधरसदृशसरोजे अलकेःदेवाक्षयानके चरणौ, शितरजभास्वरविमलौ शंभोर्नित्यं तव पान्तु ताजनान (?) यस्यप्रसादमतुलमाब्रह्म-स्तम्बपरांत(पर्यन्त)शम् । स श्रीनाथकुलेशःश्रीकुब्जिकाधिदेवो जयति, कुकारः पार्थिवो जीवा उब्जिकोपरि संस्थितः, काकाली शिवगा वक्रा सा श्रीकुब्जिका जयति(?) ।

अन्तिमंवाक्यम् ।

ऐशानश्वे तारुणवर्णपूर्वलङ्काराय खड्गशूलशरचक्रवज्राङ्कुशवरदासिद्धिपात्रदक्षिणकरे, कर-करैत्यकेशधनुगदाघण्टापाशतर्जनिविन्दु बामकरे, सिंहासनमहिसानत्रिनेत्र ।

सम्बत् ७४२ कार्तिक कृष्ण पञ्चम्यांतिथौ आर्दापर पुनर्वसु नक्षत्रे साध्ययोगे वृहस्पति वासरे, लिखित श्रीजयनारायण देवेन शुभम् ।

## कुब्जिकामतम्

क्रमाङ्कः प्र. २०४, विषयाङ्कः १२४

ग्रन्थकारः—, नेपालीयं कागतम्, नेवारी लिपिः, पङ्क्तयः ८, आकारः १४$\frac{1}{4}$×३$\frac{1}{2}$, ग्रन्थसंख्या २७००, पत्रसंख्या १०७ ।

आदिबाक्यम् ।

ॐनमः शिवाय ॥ संवर्त्तामण्डलान्ते क्रमपदनिहितानन्दशक्तिः सुभीमा सृष्टौन्यायंचतुष्कं अकुलकुलगतं पञ्चकं चान्यषट्कम । चत्वारः पंचकोन्यः पुनरपि चतुरस्तत्वतो मण्डलेदं

संसृष्टं येन तस्मै नमत गुरुवरं भैरवं श्रीकुजेशम् ॥ ॥ श्रीमद्धिमवतः पूर्व्वे त्रिकूट-शिखरे गतं । संतानपरमध्यस्थमनेकाकाररूपिणम् । त्र्यस्रं वै त्रिप्रकारन्तु त्रिशक्तिगुणमुज्वलम् ।

पुष्पिकावाक्यानि ।

इति श्रीकुलालिकाम्नाये श्रीकुब्जिनीमते चन्द्रपुरावतारो नामः पटलः ।

इति कुलालिका० आज्ञापर्यायकौमार्यावतारो नाम द्वितीयः पटलः ।

,, मन्थानभेदरतिसङ्गमो नामः तृतीयः पटलः ।

,, मन्त्रनिर्णयगव्हरमालिन्युद्धारो नामः चतुर्थः पटलः ।

,, बृहत्समयोद्धारः शब्दराशिमालिनीतद्ग्रहव्याप्तिनिर्णयो नाम पञ्चमः पटलः ।

,, जपमुद्रानिर्णयो नाम षष्ठः पटलः ।

,, मन्त्रोद्धारषडङ्गविद्याधिकारो नाम सप्तमः पटलः ।

,, स्वच्छन्दशिखाधिकारो नामाष्टमः पटलः ।

,, शिखाकल्पैकदेशो नाम नवमः पटलः ।

,, देव्याःसमयो नाम मन्त्रोद्धारो दशमः पटलः ।

,, षट्प्रकारनिर्णयो नाम एकादशः पटलः ।

,, षट्प्रकाराधिकार्णवो नाम द्वादशः पटलः ।

,, दक्षिणषट्कस्यपरिज्ञानो(नं) नाम त्रयोदशः पटलः ।

,, देवीदूतीनिर्णयो नाम चतुर्दशः पटलः ।

,, षट्प्रकाराधिकारे योगिनीनिर्णयो नाम पञ्चदशः पटलः ।

,, षट्प्रकारमहानन्दपञ्चकः षोडशः पटलः ।

,, पदद्वयहंसनिर्णयो नाम सप्तदशः पटलः ।

,, चतुष्कस्यपदे अष्टादशः पटलः ।

,, चतुष्कस्य निर्णयो नाम एकोनविंशतितमः पटलः ।

,, चन्द्रद्वीपावतारो नाम विंशतितमः पटलः ।

,, द्वीपाम्नायो नाम एकविंशः पटलः ।

,, समस्तव्याप्तिर्नाम द्वाविंशः पटलः ।

,, त्रिकाज्ञानमुत्क्रान्तिसम्बन्धस्त्रयोविंशः पटलम् ।

,, तद्ग्रहपूजापवित्रारोहणन्नाम चतुर्व्विंशतिमः पटलः ।

अन्तिमवाक्यम् ।

कृष्णच्छागा महानेत्री परुलं मेषात्मकं स्मृतम् । सामर्थज्ञविदानां च इति पूजा प्रकीर्त्तिता । सिद्धद्रव्यं समा····गाद्योगिनीमते । नान्येन रहिता सिद्धिर्भुक्तिर्मुक्तिर्न विद्यते । निराचार-पदं ह्येतत् तद्भेदं परमं स्मृतं ॥ ॥ इति कुलालिकाम्नाये श्रीमत्कुब्जिकामते परमरहस्ये श्रीमतयार (?)पंचविंशतिमः पटलः ॥ समाप्तः ॥ ॥ शुभम् ॥ ॥

## कुब्जिकामतम्

( कादिभेदः )

क्रमाङ्कः तृ. ३७८, विषयाङ्कः १२५

ग्रन्थकारः····, ताडपत्राणि, प्राचीनदेवनागरी लिपिः, पङ्क्तयः ५, आकारः १२$\frac{3}{4}$×२, ग्रन्थसंख्या ३५००, पत्रसंख्या २४४ ।

आदिवाक्यम् ।

ॐ नमो महाभैरवाय ॥ सम्वर्त्तामण्डलान्ते क्रमपदनिहितानन्दशक्तिः सुभीमा । सृष्टिन्याये चतुष्कमकुलकुलगतम्पञ्चकं चान्यषट्कम् । चत्वारः पञ्चकोन्यः पुनरपिचतुरः षोडशाज्ञाभिषेकः । देव्याष्टौमूर्त्तिमध्ये हसखफरकला बिन्दुपुष्पखमुद्रा ॥ बालं कौमार-वृद्धं परमशिवकलाचक्रदेवीक्रमेण श्रीनाथं चान्द्रपुर्यान्नवनवकलितं युग्मभेदस्तुसारम् । सिद्धा-स्त्रीत्यावतारम्प्रथमकलियुगेकुङ्कणे चाधिकारं । तेषां वै शिष्यपुत्रा नवपुरुषक्रमे तेषु मध्ये द्विरष्टौ ॥ सन्तानं गोत्रपिण्डं क्रमपदसकलं षोडशाच्चिच क्रमान्तं शेषा वैमण्डलानि परि-भ्रमविकलं पूज्यसद्भावबृन्दं । आदावष्टादशान्तं क्रमकुलसकलं मण्डलोत्थानपूर्वं । संस्कारं त्रिक्रमेण पशुमलक्षयकृत्पिण्डशुद्धि शिवाग्नौ ॥

पुष्पिकावाक्यानि ।

इत्याद्यावतारे महामंथानभैरवेयज्ञे अन्वये सप्तकोटिप्रमाणे मेरुमार्गविनिर्ग्गते लक्षपादा-धिके आद्यापीठावतारिते विद्यापीठमार्गे विमलभेदे कादिभेदे आज्ञापारमेश्वरे अव्वामत-संहितायां पश्चिमगृहसंबंधिनि अधिकारवर्णने क्रमोदयो नाम प्रथमानन्दः ।

इत्याद्यावतारे० अव्वाक्रमपुषिते श्रीमच्चंद्रमारगृहावतारवर्णनो नाम क्रमोदयो द्वितीया-नन्दः ।

इत्याद्यावतारे० अव्वामतसंहितायां अव्वाक्रमभाषिते श्रीसंतानषोडशाधिकारवर्णनो नामः तृतीयानन्दः ।

" शब्दराश्यधिकारवर्णने क्रमोदयो नाम षष्ठम आनन्दः ।

" पञ्चपीठवर्णने तावाधिकारो नाम सप्तम आनन्दः ।

" समयाधिकोरवर्णनो नाम अष्टमः आनन्दः ।

" कुलभेदाधिकारवर्णने नवमः आनन्दः ।

" क्रमाधिकारवर्णने दशमः आनन्दः ।

" पीठाधिकारवर्णनो नाम एकादशम आनन्दः ।

" पीठाधिकारवर्णने द्वादशम आनन्दः ।

" रत्नस्तवनिगदिते त्रयोदशम आनन्दः ।

" क्रमावतारो नाम चतुर्दशम आनन्दः ।

" सिद्धाधिकारवसने क्रमोदयो नाम पञ्चदशम आनन्दः ।

" ओलिपर्व संवंध समाप्तानंदः षोडशमः १ ।

" श्रीकुब्जिकाक्रमसंहितायां पूजापर्व्वाधिकारेवर्णने पूजा-
क्रमो नाम सप्तदश ओनन्दः ।

" ज्ञानपद्धतिस्समाप्तोष्टादशम आनन्दः ।

" वेधदीक्षावर्णनो नाम एकोनविंशतिम आनन्दः ।

" निर्व्वाणदीक्षावर्णनो नाम विंशतिम आनन्दः ।

" रसोदयवर्णनो नाम एक विंशतिम आनन्दः ।

" योगाधिकारवर्णनो नाम द्वाविंशतिम आनन्दः ।

" समयवर्णनो नाम त्रयोविंशतिम आनन्दः ।

" कोलाभिषेकवर्णनो नाम चतुर्विंशतिम आनन्दः ।

" चर्याधिकारवर्णनो नाम पञ्चविंशतिम आनन्दः ।

" आगमोपदेशवर्णनो नाम षड्विंशतिमः आनन्दः ।

अन्तिमवाक्यम् ।

क्रमभक्तिरता ये च पीठाराधनतत्पराः । तेषांप्रवाचयेदेवः अन्येषां नैव वाचयेत । ग्रन्थोप-जीविनोये च कपटव्रतचारिणः , एतेषांसहसंभाषां क्रमंनैव प्रदर्शयेत् । इति गोप्यंकादि-शास्त्रमेकमार्गाद्विनिर्गतं ॥ ॥ इति श्रीकादिभेदे श्रीकुब्जिकामते श्रीपश्चिमान्वये श्रीअव्वावतारिते ···· हाभेरुविनिर्गते आगमोपदेशवर्णनो नाम षड्विंशतिम आनन्दः

॥ ॥ सम्वत ३१५ वैशाख कृष्ण एकादश्यां रविदिने रेवतिनक्षत्रे ॥ शैवाचार्य श्रीश्रीवच्छरुद्रस्य प्रसादेन पुस्तकं संपूर्ण भवति ॥ श्रीराजपुत्र जश वच्छकस्य लिखितमिति शुभंभवतु । मंगलंमहा श्री ॥ लेखक कस्तवेद स्वहस्तेन लिखिमिति ॥ यथादष्टं तथा लिखितं लेखको नास्तिदोषः ॥ ॥

## कुब्जिकामतम्

विषयाङ्कः १२६

क्रमाङ्कः प्र. ४५,

ग्रन्थकारः ····, नेपालीयं कागतम्, नेवारी लिपिः, पङ्क्तयः ७, आकारः ११३/४×२१/२, ग्रन्थसंख्या ५००, पत्रसंख्या २८, खण्डितम् ।

## कुब्जिकामतम्

विषयाङ्कः १२७

क्रमाङ्कः प्र. २०४

ग्रन्थकारः ···, नेपालीयं कागतम्, नेवारी लिपिः, पङ्क्तयः ८, आकारः १ग१/४×२३/४, ग्रन्थसंख्या ५००, पत्रसंख्या २५, २ पटलात् ८ पटलान्तम् ।

## कुब्जिकामतम्

विषयाङ्कः १२८

क्रमाङ्कः प्र. २०७.

ग्रन्थकारः ····, नेपोलीयं कागतम्, नेवारी लिपिः, पङ्क्तयः ७।७, १२१/२×२३/४, ग्रन्थसंख्या २७९०, पत्रसंख्या १२७, २५ पटलान्तम् ।

## कुब्जिकामतम्

विषयाङ्कः १२९

क्रमाङ्कः प्र १४७३,

ग्रन्थकारः ····, ताडपत्राणि, नेवारी लिपिः, पङ्क्तयः ६, आकारः ११३/८×२, ग्रन्थसंख्या ३०००, पत्रसंख्या २००।

आदिवाक्यम् ।

ॐनमः श्रीगणेशायनमः ॥ ॐनमोमहाभैरवाय ॥ श्री ५ कुब्जिकाम्बायै नमः ॥ सम्वर्त्तामण्डलान्ते क्रमपदनिहितानन्दशक्तिः सुभीमा सृष्टे···· द्यश्चतुष्कं अकुलकुलगतं पंचकं चान्यषट्कम् । चत्वारः पञ्चकोन्यः पुनरपिचतुर स्तत्वतोमण्डलेशं । संसृष्टं येन तस्मै नमत गुरुवरं भैरवं श्रीकुजेशम् ॥ ॥ श्रीमद्धिमवतः पृष्ठे त्रिकूटशिखरान्तरम् । अन्थानपुरमध्यस्थमनेकाकाररूपिणम् ।

पुष्पिकावाक्यानि ।

इति कुलालिकाम्नाये श्रीकुब्जिकामते चन्द्रद्वीपावतारो नाम सम्बन्धः पटलः प्रथमः ।
इति कुलालिकाम्नाये० पीठावतारे द्वितीयः पटलः ।

,, मन्थानदरतिसङ्गमोनाम तृतीयः पटल ।

,, शङ्करमालिन्यो(?)द्धारनाम चतुर्थः पटलः ।

,, बृहत्समयोद्धारः शब्दराशिमालिनीतद्ग्रहव्याप्तिनि-

,, र्णयो नाम पञ्चमः पटलम् ।

जपमुद्रानिर्णयो नामः षष्ठमः पटलः ।

,, मन्त्रोद्धारषडङ्गविद्याधिकारो नामः सप्तमः पटलः ।

,, स्वच्छन्दशिखाधिकारो नामाष्टमः पटलः ।

,, शिखाकल्पैकदेशो नाम नवमः पटलः ।

,, देव्याःसमयो नाम मन्त्रोद्धारो दशमः पटलः ।

,, षट्प्रकारनिर्णयो नाम एकादशमः पटलः ।

,, षट्प्रकारार्णवो नाम द्वादशमोध्यायः पटलः ।

,, दक्षिणषट्कपरिज्ञानो नाम त्रयोदशमः पटलः ।

,, देवदूतीनिर्णयो नामचतुर्दशः पटलः ।

,, षट्प्रकाराधिकारे योगिनीनिर्णयो नाम पञ्चदशः पटलः

,, षट्प्रकारे महानन्दपञ्चके षोडशः पटलः ।

,, वेदद्वयहन्स(हंस)निर्णयो नाम सप्तदशः पटलः ।

,, चतुष्कस्यपदेऽष्टादशः पटलः ।

,, चतुष्कनिर्णयो नाम एकोनविंशतिः पटलः ।

,, .... .... .... विंशतिः पटलः ।

,, द्वीपाम्नायो (य)एकविंशति पटलः ।

,, समस्तव्याप्तिर्न्नाम द्वाविंशः पटलः ।

,, त्रिकालज्ञानमुत्क्रान्तिसम्बन्ध स्त्रयोविंशतिमः पटलः ।

,, तद्ग्रहपूजापवित्रारोहणं नाम चतुर्विंशतिमः पटलः ।

इति कुलालिकाम्नाये श्रीकुब्जिकामते समस्तज्ञानावबोधचर्यानिर्द्देशो नाम पञ्चविंशतिमः

पटलः ॥     ॥ इति चतुर्विंशतिसाहस्रे सारात्सारतरं श्रीकुब्जिकाम्नाय श्रीओडियानपीठविनिर्गतः पञ्चविंशतिमः पटलः ॥     ॥ सतद्व वत्सरे पूर्णे पञ्चपञ्चासकाधिके तदा आशामाशे शुक्ल दशम्यां तिथिमुत्तमं विशाखे ऋक्षं नामेतु ॥     ॥ लिखितं सार संग्रह कुब्जिकामताख्यम् ।

## कुब्जिकाकवचमालामन्त्रम्

क्रमाङ्कः प्र. १५३६,                    विषयाङ्कः १३०

ग्रन्थकारः ····, नेपालीयं कागतम् , नेवारी लिपिः, पङ्क्तयः ७, आकारः ९×३, ग्रन्थसंख्या १२०, पत्रसंख्या ११, अपूर्णम् ।

## कुब्जिकामतम्

क्रमाङ्कः प्र. १०७७,                    विषयाङ्कः १३१

ग्रन्थकारः ····, ताडपत्राणि, नेवारी लिपिः पङ्क्तयः ६, आकरः ११×२, ग्रन्थसंख्या ७००, पत्रसंख्या ३९, ८ पटलान्तो मध्येखण्डितः ।

समयः—सम्वत् आ डो २ फाल्गुण शुक्ल दिवा अश्विनिनक्षत्र शुक्रदिने श्रीमत् हरष देवस्य राज्ये श्री हलेपिङ्गविषये कोथवुटोल्लकाधिवासिना कुलपुत्र वजभावोकस्य पूजार्थम्पुण्योपार्थिना परमरहस्य पुस्तकमिदंलि खितमिति ।। शिवमस्तु ।

## कुब्जिकामतम्

क्रमाङ्कः प्र. १०७८,                    विषयाङ्कः १३२

ग्रन्थकारः ····, ताडपत्राणि, नेवारी लिपिः, पङ्क्तयः ५, ग्रन्थसंख्या १५०, आकारः ११$\frac{1}{2}$×२$\frac{1}{8}$, पत्रसंख्या १२, संवत् २८० पौषकृष्ण एकादश्यां श्रीवच्छरूद्रेण स्वपरार्थतोः लिखितमितिश्रेयः ।

## कुब्जिकामतम्

क्रमाङ्कः प्र. २०७,                    विषयाङ्कः १३३

ग्रन्थकारः ····, नेपालीयं कागतम् , देवनागरी लिपिः, पङ्क्तयः ७।८, आकारः १२-$\frac{1}{2}$×३$\frac{1}{2}$, ग्रन्थसंख्या २७००, पत्रसंख्या १२६, २५ पटलान्तम् ।

## कुब्जिकामतम्

क्रमाङ्कः प्र १३६३ विषयाङ्कः १३४

ग्रन्थकारः— । ताडपत्राणि, रञ्जनालिपिः, पङ्क्तयः ६, आकारः $१२\frac{१}{४}\times३$, ग्रन्थसंख्या ३०००, पत्रसंख्या ११९, २५ पटलान्तं मध्ये पत्रैकरहितम् ।

## कुब्जिकामतम्

क्रमाङ्कः द्वि. २२६ विषयाङ्कः १३५

ग्रन्थकारः—, ताडपत्राणि, प्राचीनदेवनागरिलिपिः, पङ्क्तयः ५, आकारः $११\frac{३}{४}\times२$, ग्रन्थसंख्या ८२५, पत्रसंख्या ४४, आदौ मध्येच खण्डितम् ।

## कुब्जिकामतम्

क्रमाङ्कः द्वि. २१६ विषयाङ्कः १३६

ग्रन्थकारः—, नेपलीयं कागतम्, नेवारी लिपिः, पङ्क्तयः ७, आकारः $१०\frac{१}{४}\times३\frac{१}{८}$,

ग्रन्थसंख्या ९६०, पत्रसंख्या ५१, समयः ७८६ ।

## कुब्जिकामतम्

क्रमाङ्कः प्र. १३२२ विषयाङ्कः १३७

ग्रन्थकारः—, नेपालीयं कागतम्, नेवारी लिपिः, पङ्क्तयः ७, आकारः $१२\frac{१}{२}\times३\frac{३}{४}$, ग्रन्थसंख्या १४००, पत्रसंख्या ६७ ।

## कुब्जिकामतम्

क्रमाङ्कः तृ. २७१, विषयाङ्कः १३८

ग्रन्थकारः—,मध्यदेशीयं कागतम्, देवनागरी लिपिः, पङ्क्तयः १०,आकारः$११\frac{३}{४}\times४\frac{१}{२}$, ग्रन्थसंख्या ३०००, पत्रसंख्या १६०, शाके १४८८ ।

## कुब्जिकामतम्

क्रमाङ्कः तृ. ,२५१ विषयाङ्कः १३९

ग्रन्थकारः ····, मध्यदेशीयं कागतम् , देवनागरी लिपिः, पङ्क्तयः ११, आकारः १३-$\frac{३}{४}\times५\frac{१}{४}$ , ग्रन्थसंख्या ४०० , पत्रसंख्या १७ , ९ पटलान्तं पूर्णम् , समयः १८५७ ,

## कुब्जिकामतम् ( कुलालिकाम्नायः )

क्रमाङ्कः प्र. १८५ विषययाङ्कः १४०

ग्रन्थकारः ····, नेपालीयं कागतम , नेवारी लिपिः, पङ्क्तयः ७ , आकारः १४३ ३/८×, ग्रन्थसंख्या २७०० । पत्रसंख्या १४१ । संवत् ८४२ ।

## कुब्जिकायुताक्षरीमन्त्रोद्धारः

कमाङ्कः तृ. ५६ विषयाङ्कः १४१

ग्रन्थकारः ····, नेपालीयं कागतम् , नेवारो लिपिः, पङ्क्तयः ६, आकारः ९ १/२×२ १/४ , ग्रन्थसंख्या १५० । पत्रसंख्या ३८ । पूर्णः ,

## कुब्जिकायुताक्षरीमन्त्रोद्धारः

क्रमाङ्कः प्र. ६७८ विषयाङ्क १४२

ग्रन्थकारः ····, नेपालीयं कागतम्, नेवारी लिपिः, पङ्क्तयः ७, आकारः १०×३ १/२, ग्रन्थसंख्या १८० । पत्रसंख्या १६ ।

## कुब्जिकाविषयकतन्त्रम्

क्रमाङ्कः प्र. १३५ विषयाङ्कः १४३

ग्रन्थकारः ····, ताडपत्राणि, प्राचीननेवारी लिपिः, पङ्क्तयः ६, आकारः ११ ७/१०×, १ ३/४ ग्रन्थसंख्या ६००, पत्रसंख्या २४ । खण्डितमपूर्णम् ।

## कुब्जिकासहस्राक्षरी

क्रमाङ्कः प्र ६२ विषयाङ्ग १४४

ग्रन्थकारः—, श्रीकण्ठनाथः, नेपालीयं कागतम्, नेवारी लिपिः, पङ्क्तयः ११, आकार, १३ ३/८×४ ३/८ , ग्रन्थसंख्या ४० , पत्रसंख्या २, पूर्णा ।

## कुब्जिकामतषट्साहस्रटिप्पणी

क्रमाङ्कः प्र. १६८६, विषयाङ्कः १४५

ग्रन्थकारः····, नेपालीयं कागतम् , नेवारी लिपिः, पङ्क्तयः ७, आकारः १२×३ १/२, ग्रन्थसंख्या ९००, पत्रसंख्या १००, आद्यन्तरहिता ।

## कुब्जिकामतस्यैकशम्भुनिर्णयपटलद्वयम्

क्रमाङ्कः प्र. ६७६, विषयाङ्कः १४६

ग्रन्थकारः ···, नेपालीयं कागतम् , नेवारी लिपिः, पङ्क्तयः ७, आकारः ९ ३/४×३ १/८, ग्रन्थसंख्या ८०, पत्रसंख्या ६, पूर्णम् ।

## कुब्जिनीस्तोत्रादिमतसारान्तसङ्ग्रहः

क्रमाङ्कः प्र. १५१२, विषयाङ्कः १४७

ग्रन्थकारः····, नेपालीयं कागतम् , नेवारी लिपिः, पङ्क्तयः ७, आकारः ११ १/४×३, ग्रन्थसंख्या १०००, पत्रसंख्या ५३, मध्येखण्डितः ।

## कुमारीतन्त्रम्

क्रमाङ्कः प्र. १५०, विषयाङ्कः १४८

ग्रन्थकारः····, नेपालीयं कागतम्, नेवारी लिपिः, पङ्क्तयः ७, आकारः १० १/८×४, ग्रन्थसंख्या १५०, पत्रसंख्या १४, ९ पटलात्मकं पूर्णम् ।

आदिवाक्यम् ।

श्रीगुरुवे नमः ॥ भैरव उवाच ॥ रूपाणि वहुसंख्यानि प्रकृतेश्चैव डारिणि । तेषां मध्ये महेशानि कालीरूपं मनोहरम् ॥ विशेषतः कलियुगे नराणां भुक्तिमुक्तिदम् । तस्या उपासकाश्चैव ब्रह्मविष्णुशिवादयः ॥ चन्द्रः सूर्य्यश्च वरुणः कुवेरोपि तथापरः । दुर्व्वासा श्च वसिष्ठश्च दत्तात्रेयो बृहस्पतिः ॥ बहुना किमिहोक्तेन सर्व्वदेवा उपासकाः । कालिकायाः प्रसादेन भुक्तिमुक्त्यादिभागिनः ॥

पुष्पिका वाक्यानि ।

इति श्रीकुमारीतन्त्रे परमरहस्ये विद्यामाहात्म्यं प्रथमः पटलः ।

" " अन्तर्योगविधिर्द्वितीयः पटलः ।

" " नैवेद्यादिविशेषविधिः चतुर्थः पटलः ।

" " पञ्चमः पटलः ।

" " कुलाचारविधिः षष्ठः पटलः ।

" " स्थाननिर्णयः सप्तमः पटलः ।

" " कुलाचारविधिर्नाम अष्टमः पटलः ।

अन्तिमं वाक्यम् ।

कुन्डपुष्पैः पूजयित्वा .... देवी दिगम्बरीम् । अमृतञ्चश्मशाने च शत्रुणां मारणां भवत् । कालीकल्पमिदं प्रोक्तं गोपयेत मातृजारवत् । गोपने सर्व्वसिद्धिःस्यात् प्रकाशे मरणं भवेत्

॥ ॥ इति श्रीकुमारीतन्त्रे परमरहस्ये कालीक्रमवर्णनं नाम नवमः पटलः समाप्तः

॥ ॥ लिखिति श्रीबालगोविन्दः ।

## कुमारीतन्त्रम्

विषयाङ्कः १४९

क्रमाङ्कः प्र १४५

ग्रन्थकारः ...., नेपालीयं कागतम्, नेवारी लिपिः, पङ्क्तयः ७, आकारः ११$\frac{3}{8}$×३, ग्रन्थसंख्या १५०, पत्रसंख्या १२, पूर्णम् ।

## कुमारीतन्त्रम्

विषयाङ्कः १५०

क्रमाङ्कः प्र १६६

ग्रन्थकारः ..., नेपालीयं कागतम् , नेवारी लिपिः, पङ्क्तयः ८, आकारः ८$\frac{1}{2}$×३$\frac{3}{8}$, ग्रन्थसंख्या ३१०, पत्रसंख्या १८।

## कुमारीतन्त्रम् (कालीकल्पः)

विषयाङ्कः १५१

क्रमाङ्कः प्र २८४

ग्रन्थकारः ...., नेपालीयं कागतम् देवनागरी लिपिः, पङ्क्तयः८, आकारः १०$\frac{1}{2}$×४$\frac{1}{2}$, ग्रन्थसंख्या ४०, पत्रसंख्या ५ आदिखण्डितम् ।

## कुमारीतन्त्रम्

विषयाङ्कः १५२

क्रमाङ्कः तृ १६५

ग्रन्थकारः ...., नेपालीयं कागतम् , देवनागरी लिपिः, पङ्क्तयः ९, आकारः ९×३$\frac{3}{4}$, ग्रन्थसंख्या १००, पत्रसंख्या ५, आदिखण्डितम् ।

## कुमारीतन्त्रम्

विषयाङ्कः १५३

क्रमाङ्कः तृ २५१

ग्रन्थकारः ...., मध्यदेशीयं कागतम् , देवनागरी लिपिः, पङ्क्तयः १२, आकारः १४×५$\frac{1}{2}$, ग्रन्थसंख्या २००, पत्रसंख्या ६, समयः— १९२१ ।

## कुमारीतन्त्रम

क्रमाङ्कः तृ २६४ विषयाङ्क १५४

ग्रन्थकारः ····, नेपालीयं कागतम्, नेवारी लिपिः,

ग्रन्थसंख्या २२५, पत्रसंख्या १५ ।

## कुलचूडामणिः

क्रमाङ्कः प्र २१८ विषयाङ्कः १५५

ग्रन्थकारः ····, नेपालीयं कागतम्, नेवारी लिपिः, पङ्क्तयः १०, आकारः१७$^{३}_{८}$×३$^{५}_{८}$,

ग्रन्थसंख्या५००, पत्रसंख्या ११ ।

आदिवाक्यम् ।

श्रीमहागणपतये नमः ॥ भैरवउवाच ॥ असंख्या त्रिपुरा देवी असंख्याता च कालिका । वागीश्वरी तथाऽसंख्या तथा तत्वकुलाकुला । मातङ्गी च तथापूर्णा विमला चण्डनायिका । त्रिपुरैकजटा दुर्गा या चान्या च कुलेश्वरी ॥ वैष्णवं गाणपत्यं च महाशौरमतं तथा । शौरशांकरजातं च यत्किचिद्भूतसंभवम् ॥ चतुःषष्टिश्च तंत्राणि मातृणामुत्तमानि च । महोमायासंवरं च योगिनीजालसंवरम् ॥

पुष्पिकावाक्यानि ।

इति श्रीकुलचूडामणौ प्रथमः पटलः ।

" द्वितीयः पटलः ।

" तृतीयः पटलः ।

" चतुर्थः पटलः ।

" पञ्चमः पटलः ।

" षष्ठः पटलः ।

अन्तिमंवाक्यम् ।

तस्मान्ममैव सर्व्वत्र सर्व्वदाहं महेश्वर । सर्व्वं त्वमेव देवेश सर्व्वं चाहं सनातन । गुरुस्त्वं यदि शिष्याहं तदा शास्त्रा विचर्चण(नम्) । तस्माद्भवान् गुरुर्वापि शिष्योहं परमेश्वर ॥ ॥ इति श्रीकुल चूडामणौ सप्तमः पटलः ॥ ॥

## कुलतन्त्रम्

विषयाङ्कः १५६

क्रमाङ्कः तृ. २५१,

ग्रन्थकारः····, मध्यदेशीयं कागतम् , देवनागरी लिपिः, पङ्क्तयः८, आकारः $१२\frac{२}{८}×४\frac{१}{८}$,

ग्रन्थसंख्या ९०, पत्रसंख्या ४, समयः १९१७।

## कुलदीपकम्

विषयाङ्कः १५७

क्रमाङ्कः प्र. ७६,

ग्रन्थकारः····, नेपालीयं कागतम्, नेवारी लिपिः, पङ्क्तयः ७, आकारः $७×३\frac{१}{२}$,

ग्रन्थसंख्या २००, पत्रसंख्या २४ ।

आदिवाक्यम् ।

स्वस्ति श्रीगणेशाय नमः ॥ ॥ अथात्मघातिनां शस्त्रजलविषाग्निव्याघ्रभल्लुकचौ-रसर्पादिभिर्मृतत्वात्पिशाचत्वं वायुरूपेण पीड्यमाने परकृत्याष्टदोषेण पीड्यमाने च शत्रु-प्रबले राज्यक्षोभिते सति भूतप्रेतपिशाचराक्षसडाकिनिवेतालादिना ममतिविग्रह्व कृते पीड्यमाने च ।

पुष्पिकाबाक्यानि ।

इति श्रीमहाकालसंहितायां द्वीपाश्रेऽमहाबलग्राच्चर्चनसंक्षेपकथनं नाम पटलं संपूर्णः ।

इति श्रीचन्द्रद्वीपावतारे कुब्जिकाप्रस्तारे भैरवभैरवी सम्वादे कुलदीपकं संपूर्णः ।

अन्तिमंबाक्यम् ।

सारभूतं महादेवी भुक्तिमुक्तिप्रदायकः ॥ संसार द्विदीपकं नाम रक्षनीयं प्रयत्नतः ॥ गुरु देवन देय इत्याग्या परमेश्वरी ।

## कुलदीपकम्

विषयाङ्कः १५८

क्रमाङ्कः प्र. २३०,

ग्रन्थकारः····, नेपालीयं कागतम् , नेवारी लिपिः, पङ्क्तयः ७, आकारः $९×२\frac{३}{८}$,

ग्रन्थसंख्या १५०, पत्रसंख्या १३, पूर्णम् ।

## कुलपञ्चाशिका

विषयाङ्कः १५९

क्रमाङ्कः प्र. १०७६

ग्रन्थकारः···, ताडपत्राणि, नेवारी लिपिः, पङ्क्तयः ५, आकारः $११\frac{३}{८}×\frac{३}{४}$, ग्रन्थसंख्या १००, पत्रसंख्या ६ ।

आदिवाक्यम् ।

ॐ नमः शिवादिभ्यो गुरुभ्यः ।। ।। अजरामरपदं व्याप्ति तृप्ति मन्त्र(?)महेश्वरः । नमामि सर्वं देवीनां देवमन्त्रतन्त्रहरम् ।। कैलासे तु महादेव अनन्तं कल्प चोदितम् । क्रमागतमहाज्ञानं भाषितन्दिव्यरूपिणम् ।। ऋषिभिश्च सुरैः सिद्धै गणैश्च परिवारितम् । पृच्छति स(स्म)उमासम्यक्कायती परमेश्वरः ।।

पुष्पिकावाक्यानि ।

इति कुलपञ्चाशिकायाम्प्रथमः पटलः ।
" द्वितीयः पटलः ।
" तृतीयः पटलः ।
शिवविभागश्चतुर्थः पटलः ।

अन्तिमवाक्यम् ।

अद्य मे सफलं जन्म अद्य मे सफलं तपः । देव त्वञ्चाद्य सफलं त्वया तुष्टेन शङ्करः ।। ।।
इति कुलपञ्चाशिकायां श्रीमत्सन्दपोवतारे पञ्चमः पटलः समाप्तः ।।

## कुलप्रदीपः

क्रमाङ्कः प्र. १०७६ विषयाङ्क १६०

ग्रन्थकारः····, ताडपत्राणि, नेवारी लिपिः, पङ्क्तयः ५, आकारः११$\frac{5}{8}$×१$\frac{3}{4}$, ग्रन्थसंख्या ४००, पत्रसंख्या २४, खण्डितोऽपूर्णः ।

आदिवाक्यम् ।

ॐ नमो महाभैरवाय ।। ज्योतिरानन्दलक्षणमद्वयमेकान्तं परमनिर्वाणम् । पटकूटक्रमविकृतिंनमत महाभैरवं नाथम् ।। इयमकुलामृतमाद्यपरिणाममधुष्टकोदिगुणसिद्धि अपर परापर परमशक्ति श्रीकौलिक जयन्तु ।। मेरुसृङ्ग समासीन सिद्धगान्धर्व्व पूजितम । प्रणम्य भैरवनाथन्देवि देवाद्यामब्रूवोत् ।।

पुष्पिकावाक्यनि ।

इति कुलप्रदीपे आज्ञानन्दावतारिता प्रथमः(ने) पटलः ।
इति श्रीआज्ञानन्दावतारिते कुलप्रदीपके द्वितीयः पटलः समाप्तः ।
इति श्रीकुलप्रदीपके आज्ञानन्दावतारिते तृतीयः पटलः समाप्तः ।

" " चतुर्थः पटलः समाप्तः ।

इति आज्ञानन्दावतारिते कुलप्रदीपके पञ्चमः पटलः समाप्तः ।

इति कुलप्रदीपके आज्ञानन्दावतारिते षष्ठमः पटलः समाप्तः ।

अन्तःवाक्यम् ।

इत्यपि द्वादशश्लोकानुग्रहकारिणे ॥ कुब्जिका चतुष्टये देवि दर्शिता परमात्म.... ।

अतः परं खण्डितम् ।

## कुलमार्गीयकिञ्चित्तन्त्रम्

विषयाङ्कः १६१

क्रमाङ्कः च.

ग्रन्थकारः···, ताडपत्राणि, नेवारी लिपिः, पङ्क्तयः ७ आकारः ···· ···· ग्रन्थसंख्या २७०, पत्रसंख्या २६, अपूर्णम् ।

आदिवाक्यम् ।

ॐ नमश्चण्डिकायै ॥ गुरुं गणपतिं दुर्गां वटुकं शिवमच्युतम् । ब्रह्माणं गिरिजां लक्ष्मीं वाणीं वन्दे विभूतये ॥ चतुर्विधशरीराणि कृत्वा मुक्त्वा च सर्व्वशः । सुकृतात्मा नरो भूत्वा ज्ञानी चेन्मोक्षमाप्नुयात् ॥

अन्त्यवाक्यम् ।

रजस्वरा(ला)या रजोरक्तविन्द्वै(न्दुभि)राविलन्नवस्त्रं परिधाय निरयम् । पर्णं चचर्व्वत्सह बालयांके कौलेश्वरो नन्दति कौलकेशात् ॥ ॥ सुन्दर्य्या नवप्रकाल(र)दीक्षा ॥ संकेतसारे ।

अतः परं खण्डितम् ।

## कुलमुक्तिकल्लोलिनी

विषयाङ्क १६२

क्रमाङ्कः प्र १६७५,

ग्रन्थकारः ····, आद्यानन्दनः, नेपालीयं कागतम्, देवनागरी लिपिः, पङ्क्तयः १०, आकारः १५¾×५½, ग्रन्थसंख्या १००००, पत्रसंख्या ३०२ ।

आदिवाक्यम् ।

श्रीगुरुगणपतीष्टदेवताभ्यो नमः ॥ ॥ नमामः सदानन्दरूपामनाद्यामगोत्रां च गोत्रावतारां सुनन्दाम् ॥ सुगोत्रोद्भवां भासमानां भवाब्धौ नृणां तारिणीं तारसर्गामनिन्द्याम् ॥ वाक्यान्युच्चावचानि प्रमथपतिकृतानीह वैज्ञानिकैर्य्यान्युक्तानि व्यक्तचर्य्यान्यनभिहितहृदां द्वापराधायकानि ॥ तान्येवालोक्य भावं भवचरणसरोजार्च्चकानां गुरूणां

ज्ञात्वा वक्ष्येहमाद्याभजनस्तुतिविभेदाय यत्तद्विधानम ।। सव्यापसव्यपथदभेविवेकरूपां निः श्रेणिकाममलमुक्तिमभीप्सितानाम् ।। श्रीमान्नवान्तगतमीमृगराजसंज्ञः(?)कल्लोलिनीं वितनुते कुलमुक्तिपूर्वाम् ।। आद्यानन्दन इत्येवख्यातनामा गुरोर्मुखात ।। भक्त्युद्रेकादप-र्णायां ञ्चचलत्वं व्रजाम्यहम् ।।

पुष्पिकावाक्यानि ।

इति श्रीआद्यानन्दनविरचितायां कुलमुक्तिकल्लोलिन्यां प्रथमः पटलः ।

" " द्वितीयः पटलः ।

" " तृतीयः पटलः ।

" " चतुर्थः पटलः ।

" " पञ्चमः पटलः ।

" " षष्ठः पटलः ।

" " सप्तमः पटलः ।

" " अष्टमः पटलः ।

" " नवमः पटलः ।

" " दशमः पटलः ।

" " एकादशः पटलः

" " द्वादशः पटलः ।

" " त्रयोदशः पटलः ।

" " चतुर्दशः पटलः ।

" " पञ्चदशः पटलः ।

" " षोडशः पटलः ।

" " सप्तदशः पटलः ।

" " अष्टादशः पटलः ।

" " ऊनविंशतितमः पटलः

" " विंशतितमः पटलः ।

" " एकविंशतितमः पटलः ।

अन्तिमं वाक्यम् ।

कल्लोलिनीवलितबोधसहस्रपत्रप्रोद्यन्मधुक्रमगकौलिकसंघभृङ्गाः ॥ वर्गार्थिनः सरभसं प्रापबन्तु नित्यं गुर्वङ्घ्रिपद्मभजनात्तदपीह लभ्यम् ॥ ॥ इति श्री आद्यानन्दनविरचितायां कुलमुक्तिकल्लोलिन्यां द्वाविंशतितमः पटलः समाप्तः ॥ ॥ शुभम् ।

## कुलमुक्तिकल्लोलिनी

विषयाङ्कः १६३

क्रमाङ्कः ५,

ग्रन्थकारः आद्यानन्दनः, नेपालीयं कागतम् , देवनागरी लिपिः, पङ्क्तयः १०, आकारः १७१०×५½, ग्रन्थसंख्या ९५००, पत्रसंख्या २२२, खण्डिता ।

## कुलमुक्तिकल्लोलिनी

विषयाङ्कः १६४

क्रमाङ्कः प्र. १८२

ग्रन्थकारः नवमीसिंहः, नेपालीयं कागतम् , नेवारी लिपिः, पङ्क्तयः ८, आकारः १५⅞×४⅞, ग्रन्थसंख्या १५०, पत्रसंख्या ५, कतिचित्पत्राणि ।

## कुलमूलरत्नपञ्चकावतारः

विषयाङ्कः १६५

क्रमाङ्कः प्र १४६६

ग्रन्थकारः — , नेपालीयं कागतम् , नेवारी लिपिः, पङ्क्तयः ६, आकारः १२$\frac{3}{8}$×३$\frac{3}{8}$, ग्रन्थसंख्या ८००, पत्रसंख्या ५४ ।

आदिवाक्यम् ।

ॐनमः शिवादिगुरुभ्यः ॥ पञ्चाशद्वर्णरूपस्थं यामलं यच्चव्यापकम् । कुलाकुलतयाकृत्वा प्रत्यक्षं तं नमाम्यहम् ॥ शृङ्गाटं गोलकान्ते स्फुरदमलमलं पीठदिव्यौघयुक्तम् । विद्यु द्रत्नप्रभाभं प्रलयशिखिशिखाकाररूपं विचित्रं तन्मध्ये कुब्जिकाख्या सकलगुणयुता ज्ञानसंघं गिरन्ती श्रीमित्रोत्संगसंस्था ददतु विनमिता भुक्तिमुक्त्युर्म्मिधर्म्मम् ॥

पुष्पिकावाक्यानि ।

इति कुलमूलरत्नपञ्चकावतारे तृतीयनिर्णय प्रथमः पटलः ।

" " कुलाष्टकनिर्णये द्वितीयः पटलः ।

" " श्रीषट्कनिर्णये तृतीयः पटलः ।

" " तृतीयनिर्णये चतुर्थः पटलः ।

" " श्रीमहामण्डलपूजाधिकारे पञ्चमः पटलः ।

" " श्रीक्रमोद्धारविधौ षष्ठः पटलः ।
" " गूढस्थाने निर्णयः सप्तमः पटलः ।
" " श्रीक्रमपूजाभिधाने अष्टमः पटलः ।
" " योगज्ञाने हंसादिनिर्णयो नवमः पटलः ।
" " पवित्रकविधौ दशमः पटलः ।

अन्तिमवाक्यम् ।

कुलाभिषेकसंयुक्त स्त्रिया(यैवा)पुरुषोपि वा(षाय वा) । दातव्या निश्चितं देवि शिष्याय क्रमिकाय च ॥ अन्येवो(न्येभ्य)स्तु नकदाचिन्क्रमरक्षा कुलेश्वरी । गोपनीयं प्रयत्नेन यदीच्छेच्चिरजीवितम् ॥ ॥ इति श्रीकुलमूलरत्नञ्चचकावतारे रक्षानिर्णय एकादशः पटलः ॥ ॥ इति श्रीद्वादशसाहस्रे श्रीमतसंहितायां सारात्सारतरं रत्नपञ्चकावतारं समाप्तम् ॥ ॥ शुभमस्तु सर्व्वदाशुभम् । अत्र ४८ पत्रपर्यन्तं प्रस्तुतो ग्रन्थःसमाप्तः अतः परं ५४ पत्रपर्यन्तं ६ पत्रात्मकं काकचण्डेश्वरीमतमिति ।

## कुलमूलरत्नपञ्चकावतारः

क्रमाङ्कः प्र ४५ विषयाङ्कः १६६

ग्रन्थकारः—। नेपालीयं कागतम् , नेवारी लिपिः, पङ्क्तयः ७, आकारः ११$\frac{७}{८}$×२$\frac{१}{४}$, ग्रन्थसंख्या ७००, पत्रसंख्या ४०, समयः ७६३ ।

## कुलरत्नोद्योतः

क्रमाङ्कः प्र १६, विषयाङ्कः १६७

ग्रन्थकारः— । आदिनाथः, नेपालीयं कागतम् , नेवारी लिपिः, पङ्क्तयः ८, आकारः १०$\frac{३}{४}$×३$\frac{३}{४}$, ग्रन्थसंख्या १४००, पत्रसंख्या ९६, लेखसमयः– ने. सं. ७५४ ।

आदिवाक्यम् ।

ॐ नमो महाभैरवाय ॥ श्रीदेव्यै नमः ॥ चन्द्रार्कानलमण्डलावृतपदे सिंहासने संस्थिता धर्माधर्मपटाच्छदे नवकला वामादिसंभूषिते ॥ तत्स्थः सोममरीचिमण्डितजटः सोमो महाभैरवः श्रीमाञ्छ्रीक्रममातृचक्रसहितः स श्रीगुरुः पातु वः ॥ अनादिपीठमध्यस्थं व्यापकं सर्वतो मुखम् ॥ कैवल्यं निर्गुणं शान्तं सर्वातीत परापरम् ॥ सदोदितमहानन्द-

परमानन्दनान्दतम् ॥ महामातृगणोपेतं सुरसिद्धनमस्कृतम् ॥ ब्रह्मविष्णुमहेन्द्रार्क-
स्कन्दनन्दिगणाधिपैः ॥

अन्तिमवाक्यम् ।

इत्येतत्कथितं तुभ्यं रहस्यं गूढमुत्तमम् । पश्चिमाम्नायसत्वर्थं (?) पारंपर्यक्रमान्वितम् ॥
उत्तमं सर्वमार्गाणां नदीनां जाह्नवी यथा ॥ मोक्षामृतरसं दिव्यं सिद्धिसंदोहसागरम् ॥
यथा स्वादं रसानाञ्च अमृतस्य बिशेषणम् ॥ तथाहि सर्वमार्गाणां पश्चिमं श्रीकुलान्व-
यम् ॥ पारम्पर्यं ? गतिर्देवि यस्यैषा वक्रसंस्थिता ॥ मया तुल्यः स देवेशि भवेत्पूज्यो न
संशयः ॥ इत्येतत्कथितं सर्वं कुलरत्नमहोदयम् ॥ पारम्पर्यक्रमायातं मोक्षमार्गं सुदु-
र्लभम् ॥ ॥ इति श्रीआदिनाथविनिर्गते पञ्चाशत्कोटिविस्तीर्णे श्रीकुब्जिकामते
कुलरत्नोद्योते प्रयागादिचक्रपूजाप्रतिष्ठानानाकर्मकरणकर्म्मारम्भाचार्याभिषेकयोगिनो मन्त्रेष्टि-
विधानो नाम चतुर्दशः पटलः समाप्तः ॥ १४ ॥ श्रीमत्कुलागमं ह्येतत्प-
श्चिमाम्नायसंभवम् ॥ सूचकं सर्वमार्गाणां भविष्यविधिना स्फुटम् ॥ ॥ श्रेयोऽ-
स्तु संवत् ७५४ श्रावणशुक्ल चतुर्दशो अङ्गारवार थ्व कुन्हु थ्व पुस्तक सम्पूर्ण दिन ।
लिखितं संपूर्णं गंगाराम हेनेति शुभ श्रीआदिनाथाय श्रीपरादेव्यै नमः ॥ थ्वदं श्रीभवानी
शंकर प्रीतिन श्रीकालिदासन संचययाङा ॥ उमेश प्रीतये तन्त्रं कालिदासेन संचितम् ॥
अनेन पुण्ययोगेन तयोरन्ते रयोस्तु मे ॥ ॥

पुष्पिकावाक्यानि ।

इत्यादिनाथविनिर्गते पञ्चाशत्कोटिविस्तीर्णे श्रीमद्वक्रिकामते कुलरत्नोद्योते प्रथमा-
वतारपटलः ।

इति श्रीवक्रिकामते पञ्चाशत्कोटिविस्तीर्णे श्रीमदादिनाथविनिर्गते कुलरत्नोद्योते कौमार-
क्रमाधिकारो नाम द्वितीयः पटलः ।

इत्यादिनाथविनिर्गते पञ्चाशत्कोटिविस्तीर्णे श्रीकुब्जिकामते कुलरत्नोद्योते क्रमनामा-
धिकारो नाम तृतीयः पटलः ।

इति श्रीआदिनाथविनिर्गते पञ्चाशत्कोटिविस्तीर्णे श्रीवक्रिकामते कुलरत्नोद्योते द्वीपा-
म्नायाधिकारो नाम चतुर्थः पटलः ।

इति श्री० पञ्चमः पटल ।

इति श्रीआदिनाथविनिर्गते पञ्चाशत्कोटिविस्तीर्णे श्रीकुब्जिकामते कुलरत्नोद्योते मन्त्रविद्योद्धारो नाम षष्ठमः (?) पटलः ।

इति श्री० पूजाधिकारः सप्तमः पटलः ।

" क्रियाकाण्डेऽष्टमः पटलः ।

" परापरसंताननिर्णयो नाम नवमः पटलः ।

" चतुर्विधशब्दावतारे श्रीमहामण्डले पूजाविधानो नाम दशमः पटलः ।

" भविष्यपूर्वाम्नायावतारसूचनं नामैकादशः पटलः ।

" मुद्राचारध्यानाराधना नाम द्वादशः पटलः ।

" श्रीकुलसंतानादिसूत्रनिर्णयो नाम त्रयोदशः पटलः ।

" प्रयागादिचक्रपूजाप्रतिष्ठानानाकर्मकरणकर्मारम्भाचार्याभिषेकयोगिनो मन्त्रेष्टिविधानो नाम चतुर्दशः पटलः । इति

## कुलवृत्तिः

क्रमाङ्कः प्र. २६२, विषयाङ्कः १६८

ग्रन्थकारः— पूर्णानन्दः, नेपालीयं कागतम्, नेवारी लिपि., पङ्क्तयः १३, आकारः १४×४½, ग्रन्थसंख्या ६५००, पत्रसंख्या १७०, समयः ७५० ।

आदिवाक्यम्

ॐनमो गणपतये ॥ दशगुणशतपत्रप्रोल्लसद्ब्रम्हपद्मप्रमिलितगुणलेशप्रोन्मिलद्बिन्दुपीठम् । भजत गुरुपदाब्जं न्यक्कृताब्जं सदाभं हृदयकलुषशान्त्यै सर्व्वशास्त्रानुशान्त्यै ॥ कनके कटकज्ञतिरिव यस्मिन् जगत्त्रयं ॥ कायातीतं वचोतीतं मनोतीतमुपास्महे ॥ नाना तन्त्रात्समाकृष्य संक्षेपेण कुलार्चनाम् । कुलवृत्तिं तनोम्येनां पुरुषार्थ फलाप्तये ॥ संसार दुःखदावाग्ने दूंह्यतः सकलान् जनान् । उद्दिधीर्षुः कृपासारः पूर्णानन्दोहमादरात् ॥ सन्तीह यद्यपि ग्रन्थाः संग्रहाः कृतिनिर्म्मिताः ॥ तथापि क्रियते तत्र हेतुं ग्रन्थो वदिष्यति ॥ कुलवृत्तिरियं कन्या कुलीनाय प्रदीयते ॥ यथाशास्त्रं कुलीनेन लालनीया सुखाप्तये ॥

